

# अजस्रा

## प्रो० सत्यव्रतसिंहस्मृतिविशेषाङ्कः

संस्कृत-त्रैमासिकी

# अजस्रा

१९८७-१९९१ वर्ष : १०-१४

प्रोफेसरसत्यव्रतसिंह स्मृति-विशेषाङ्कः

**अखिल-भारतीय संस्कृत-परिषद्**

**महात्मा गाँधी मार्ग, हजरतगंज**

**लखनऊ—२२६००१**

**शुल्कम्**

| | | |
|---|---|---|
| वार्षिकम् | १५.०० रूप्यकाणि; | ५.०० $ (विदेशेषु) |
| एकस्याङ्कस्य | ४.०० रूप्यकाणि | |
| आजीवनम् | १५०.०० रूप्यकाणि | |

प्रोफेसरसत्यव्रतसिंह–स्मृतिविशेषाङ्कः—७५.०० रूप्यकाणि

**सम्पादकः**

डॉ० अशोककुमार कालिया

अखिल - भारतीय संस्कृत-परिषद्, महात्मा गाँधी मार्ग, हज़रतगंज, लखनऊ–२२६००१ की ओर से डॉ० जगदम्बाप्रसाद सिनहा द्वारा प्रकाशित, डॉ० अशोककुमार कालिया द्वारा सम्पादित, तथा श्री विश्वमोहन द्वारा प्नार मुद्रक, ११७ नज़ीराबाद, लखनऊ में मुद्रित ।

दवीं वाचम् उद्यासं शिवाम् **अजस्रां** जुष्टां देवेभ्यः

लौ० गृह्य० ४३ का०

---

# अनुक्रमणिका

## प्रोफेसरसत्यव्रतसिंह-संस्मृतिः

## उत्तरा

—○—

## सम्पादकीयम्

अजस्राया विशेषाङ्कमिमं सहृदयानां सम्मुखम् उपस्थापयतो मम मनसि समुल्लसति महती हर्षानुभूतिर् यद् विद्याविद्योतितान्तःकरणानां विद्वद्वर्याणां डॉक्टर-सत्यव्रतसिंहमहोदयानां महनीयायै स्मृत्यै विशेषाङ्करूपश्रद्धा-पुष्पसमर्पण-स्याऽन्ततश्चिरप्रतीक्षिता वेला सम्प्राप्तैवाऽद्य । एभिर् महानुभावैर् अखिल-भारतीय-संस्कृतपरिषदो विविधरूपोपकृतिः समनुष्ठिता । अजस्राया-श्चैतस्या एते महानुभावाः न केवलं वरिष्ठाः महनीयाश्च सम्पादकमण्डलसदस्या आसन् अपितु पत्रिकामिमां समुन्नेतुं बहुविधलेखादिसामग्रीसमुपाहारेणाऽलङ्कृत-वन्तोऽपि । अद्य तेषामभावे तेषां महत्त्वं स्वत एव सहजमेव सर्वेषां मनोगोचरी भवति । अद्योत्तरप्रदेशस्य राजधान्यां तेषां परमपदवीप्राप्त्यनन्तरं परिव्याप्तं महच्छून्यं महानन्धकारश्च दृष्टिपथं व्याकुलीकरोतीव । किं कुर्मः, संसृति-स्वभाव एव तादृशः । इदानीमेते विद्वद्वर्याः स्मृतिशेषाः वयं च तत्स्मृतिधनिनः सञ्जाताः । तदेव स्मृतिधनमस्मदीयं कथञ्चिदपि सुरक्षितं तिष्ठेद् इति भावनैव विशेषाङ्कप्रकाशनस्याऽस्य प्रेरणा जाता ।

अस्य स्मृत्यङ्कस्य प्रकाशनेऽस्माभिर् बहुविधं काठिन्यमपि समनुभूतम् । इदानीमपि डॉक्टरसत्यव्रतसिंहसम्बद्धानि विद्वद्भिः प्रतिज्ञातानि तानि तानि संस्मरणान्यनुपलब्धान्येव विराजन्ते । भवतु, किंवा प्रपञ्चितेनैतेन । अजस्राया विशेषाङ्कोऽयं विलसत्येवाऽन्ततो भवतां सहृदयानां समक्षं सुन्दरो वाऽसुन्दरो वा ।

अजस्रायाः समयतः प्रकाशनम् बहुकालादवरुद्धं वर्तते। सहृदयपाठकानां न्यायालयेऽजस्रायाः सम्पादकाः प्रकाशकाश्च वयमुत्तरदायिनः सञ्जाताः। यदुत्तरमस्ति तत्तु विदितमेवाऽस्ति सर्वेषाम् अजस्राप्रणयिनाम्। न किञ्चिन्नवमुत्तरं प्रतिभातीति कृत्वा मौनमेव वरम्। भविष्ये नियमितप्रकाशनं सम्भवेद् इति बुद्ध्याऽनेकाङ्कसङ्घातभूतो विहितः स्मृत्यङ्कोऽयम्। आशासे यत्पत्रिकेयमग्रे नियमितप्रकाशना सम्भविष्यति।

—०—

**जगद्गुरुपुरुषोत्तमाचार्याः**
सुग्रीव किला, अयोध्या

## श्रीसत्यव्रतत्रितयी

[१]

यः सत्यनिष्ठो नृषु सिंहरूपः
साहित्यसेवाव्रतदीक्षितश्च ।
नित्येव भूतिः खलु लक्ष्मणाख्येऽ-
सौ विश्वविद्यालय आचकास्ति ॥

[२]

विद्याव्रती तीव्रतपस्सु निष्ठो
यः साधकानां प्रियमार्गदर्शी ।
ज्ञानप्रदश्छात्रहिते सुरक्तः
सत्यव्रतः सिंहयुतो हि जीयात् ॥

[३]

जयति जयति नूनं कीर्तिदीप्तो महीयान्
गुणगणपरिपूर्णः पूर्णचन्द्रोपमोऽयम् ।
बुधजनहृदि तोषं भूरिशः सन्दधानः
पटुतरमतिकार्यैः सत्सभामौलिवन्द्यः ॥

—०—

पं० रामनारायण त्रिपाठी
लखनऊ

# साञ्जलिः संस्मृतिः

संज्ञामन्वर्थयन् स्वां हृदयवचनतः कायतो यो द्रढिम्ना
रक्षन् क्षात्रात्ममानं बुधजनमहितः प्रौढपाण्डित्यपूर्णः ।
कृत्या लोके प्रतिष्ठामभजदविरलां गौरवं शुभ्रकीर्तिं
श्रीलं सत्यव्रतं तं स्मृतिपथमनिशं भक्तिभावैर्नयामः ॥

संसारेऽस्मिन् जन्मनीह परिचयाद्यखिलसम्बन्धमूलं पूर्वजन्मजातसंस्कारः, अदृष्टम्, भगवदिच्छाद्येवेति मन्यते भारतीयसंस्कृतिचिन्तकैः । विश्वसिमि यन्नात्र काचन विमतिः केषाञ्चित् । तदनुसारमेव देशकालदशावस्थास्थितिसापेक्षं नैमित्तिको नैसर्गिको वा यो वा को वा यादृशो वा तादृशो वा संबन्धो यावज्जीवनमेकदेशं वाऽल्पकालं चिरं वा यावत् साक्षात् परम्परया वा यस्य कस्यचित् केनचिद् बहुमिश्च वा सार्धं जायतेऽजनि जनिष्यति । स च संबन्ध आभाषणपूर्वकमेव प्रवर्तते सर्वः सर्वत्र । मन्ये मामकोऽपि सम्बन्धस्तद्धेतुमूलक एव जातोऽनेन श्रेष्ठपुरुषेण सह । अध्यापयन्नधिकाशि विद्याधनिनं शास्त्रमर्मज्ञं गुणिगणानुरक्तं बहुश्रुतं सूक्ष्मचिन्तनशीलं परमजिज्ञासुं दृढस्कन्धं राजन्यवंशावतंसं वरिष्ठपुरुषं डॉ० सत्यव्रतसिंहं भिषग्वरप्रियव्रतसिंह-द्वारा पर्यचैषमहं प्रथमम् । अयं चिकित्सकोऽपि तस्यानुज एव । अनन्तरं पौनःपुन्येन मिथो मेलनेन शनैः शनैः स परिचयो दार्ढ्यमापन्नस्तदैहिकलीलापर्यन्तमेकरूपेणासीत् । न तत्संबन्धे कदापि क्वचिदपि किञ्चित् कालुष्यं जातम् । इदानीं प्राप्तावसरे जातायां तच्चर्चायां तं पुरुषवरं तत्कृतिं तद्वागवैदग्ध्यं स्मारं स्मारं चेखिद्यतेऽभीक्षणं मे मनः ।

एष जनो महान् सनातनपरम्परानुयायी प्रकृतिगाम्भीर्येऽपि विनोदप्रियः, साम्प्रतिके युगे लोकव्यवहारं समाजानुरूपं निर्वोढुं कात्स्र्येन प्राचीनां परिपाटीं स्वयमपालयन्नपि तन्निर्वहणपरं जनं तां परिपाटीं सम्यग् निभालयितुं समानं समादरपूर्वकं प्रोदसाहयत् साहाय्यञ्चाकरोत् तादृशे विषमेऽवसरे समुपस्थिते। अन्वभावि बहुशोऽनेन जनेनास्मिन् विषये स्वं प्रति स्वेतरान् प्रति च। बहुधा स्वगेहे जातायां ममोपस्थितौ सत्कारप्रसङ्गे मामकीं वृत्तिमवलोक्य धर्मप्रियां सौम्यामुदात्तचरितां पाणिगृहीतीमवदत् सहासम् 'सकल पदारथ एहि जग माही। भाग्यहीन नर पावत नाही 'इत्युक्त्वा आधुनिकखाद्यपेयवस्तुप्रदाने तां न्यवारयत्, अकथयच्च 'पोंगा पण्डितोऽयम्' न देयमेतत्सर्वमस्मै, इत्थं विनोदकलया मिथोऽमन्दमानन्दं वितरन् स्वयमहसत् प्रियजनान् स्वाञ्चाऽहासयत्।

शास्त्रविषयेऽस्य मान्यपुरुषस्य महती रुचिः, दृढा प्रविष्टिः ग्रन्थग्रन्थि-भेदनक्षमा मनीषा, प्रायः प्राप्तावसरे नौ कालः शास्त्रचर्चयैव व्येति स्म। अद्वैतविशिष्टाद्वैतदर्शनयोः समा गतिरस्य। दृष्टवानस्म्येकदा कस्यचित् कश्मीरजविदुषः शैवसिद्धान्तमाश्रित्य भाषणप्रसङ्गे अस्य विद्वद्वर्यस्य चमत्कारि पाण्डित्यम्।

व्यवहारे त्वयं वाचंयमः, यत् कर्त्तुमशक्नोत् तत्रैव ओमित्यवदत्, नहि सर्वत्र सन्तुष्ट्यै शिरश्चालनं वाग्व्ययञ्चाचरत्। यत्र चानेन स्वीकृतिः प्रादायि तत् सर्वथा सर्वदा समपादि निवार्य विघ्नबाहुल्यम्। सत्यवक्ता दृढ-प्रतिज्ञश्चैतादृशो वरजनो विरलो विलोक्यते।

मन्ये स्वकीयं क्षात्रधर्मं 'वाचोऽविग्लापनं वाचोऽपरिवर्तनं वाचो दृढ-त्वम् स्वजीवनेऽयं क्षत्रियकुलावतंसः समीचीनतया न्यभालयत्।

एतावदेव गुणैकदेशमात्रमुच्चार्य तदुपकृतिं शिरसा बिभ्रन् साञ्जलिः संस्मरामि तत्कृतिम्।

—०—

डॉ० बिन्दाप्रसादमिश्रः
लखनऊ

# सत्यव्रतः शाश्वतसत्यनिष्ठः

१

प्रभारतास्त्युत्तरभारते वै
ख्याता पुरी या बलियेति नाम्ना ।
गुणाभिरामैर्गुणिभिर्वरेण्यै-
र्निषेविता सा जननीव नित्यम् ॥

२

क्षेत्रे तदीये यशसातिशुभ्रे
राजन्यवंशेऽजनि पुण्यकुक्षेः ।
सरस्वतीपुत्रवदेव गुण्यः
सत्यव्रतः शाश्वतसत्यनिष्ठः ॥

३

स बाल्यकालात् प्रतिभामहाधनी
सुशीलतां मोदमयीं विनम्रताम् ।
अवाप शास्त्रीयसमग्रवेत्तृतां
विना प्रयासेन विदग्धचातुरीम् ॥

४

अभूत् स कीर्त्यातितरां विलक्षणः
सुलक्षणोऽभूद् विबुधस्य लक्षणैः ।
प्रतिक्षणं तेन कृतं महीतले
सनातनं संस्कृतसारसर्जनम् ॥

५

सदा स वर्णाश्रमधर्ममर्मगो
न मर्मगोऽभूत् कुटिलस्य कस्यचित् ।
सशान्तचित्तः सुविचारकारको
महामनीषा सुजनैः प्रणम्यते ॥

६

अभूत् सदाचारविचारपोषको
न पोषकोऽभूत् सुविचारकस्य किम् ।
स रञ्जकोऽभूत् सुजनस्य सर्वदा
विभञ्जकोऽभूत् खलनायकस्य वै ।

७

न केवलं शाब्दिक एव सोऽभू-
दभूदसौ काव्यकलाधिवेत्ता ।
व्याख्यातवान् मातृगिरा निगूढं
काव्यप्रकाशं विशदामलं यः ॥

८

पुनः पुनः काव्यरसेन पूर्णः
पूर्णः सदाऽहो नवदर्शनेन ।
आकण्ठमग्नो नहि सन् स भग्न
आसीत् कदाचित् स्वे जीवने वै ॥

९

रामानुजं तं प्रणिपत्य प्रीत्या
कीर्तिस्तदीया नहि रक्षिता किम् ।
सदैब सच्चिन्तनतत्परेण
सरस्वती मानबलेन तेन ॥

१०

उपास्य विद्यानिलयं बहूनि
वर्षाणि शारीरकपाठनेन ।
सेवानिवृत्तः स निवृत्तमोहः
कालान्तरे कृष्णपदञ्च लेभे ॥

११

अद्यापि देशे नगरे च ग्रामे
शिष्या विदेशे प्रथितास्तदीयाः ।
सर्वत्र कीर्तिं नवचेतनां तां
विस्तारयन्तो ननु भावयन्ति ।

—०—

**डॉ० ब्रह्ममित्र अवस्थी**
दिल्ली

# करुणावरुणालयो डॉ० सत्यव्रतसिंहमहोदयाः

करुणावरुणालयानां सरस्वत्याः वरदपुत्राणां साहित्य-दर्शन-शास्त्रपारदृश्वनां डॉ० सत्यव्रतसिंहमहोदयानां नामाक्षरैः कृतिभिश्च को नाम भवेदपरिचितः संस्कृतवित् । भारतवर्षस्य सर्वास्वपि दिक्षु तेषां साक्षाच्छिष्याः तेषां ग्रन्थैर्वा गृहीतविद्याः जनाः तदीयेनैव तेजसा राराजन्ते । अहमपि तेषान्तपोमूर्त्तीनामन्तेवासित्वमवाप्यात्मानं धन्यधन्यं मन्ये । तेषां चरणयोः स्थित्वा विद्याध्ययनस्य सौभाग्यं ममाभूदेव, परं प्रथमदर्शनदिनादारभ्य चरमदिनावधि तेषां वात्सल्यभावभरितं स्नेहमवाप्याहं कृतार्थोऽभूवम् । इदं तेषां महद्वैशिष्ट्यमभूद् यत्ते वचोभिः करुणां स्नेहं वा न कदापि प्राकाशयन् । परं फलैस्तेषां करुणाप्रवाहः पुत्रान् शिष्यान् पार्श्ववर्त्तिनो वा दीनाञ्जनानहर्निशमाप्लावयत् । यथोदुम्बरतरुः न कदापि पुष्पाणि प्रकटयति, परमसावसंख्यातैः फलभरितैः गुच्छकैः स्वं महिमानं बोधयति, तथैव डॉ० सत्यव्रतसिंहमहोदयोऽपि न कदापि प्राकटयद् यदसौ प्रसादवान्, साह्यं वा कस्यापि कर्तुं कामयते । तेषामहैतुकी कृपा सदा फलैरेवानुमेयाऽभवत् । अत्र प्रसङ्गे शतशो निदर्शनानि मम मनस्यहमहमिकया पुरतो नरीनृत्यन्ते ।

अहं स्वजीवने द्वादशवर्षाण्यध्यापनाद्याजीविकाकर्म निरूह्य पञ्चजनीनपरिवारसहितोऽप्यध्यापनवृत्तिमयीं जीविकां परित्यज्य 'एम. ए.' कक्षायामध्येतुकामो लक्ष्मणपुरविश्वविद्यालयं प्राप्तवान् । तद्दिनेषु मम सविधेऽर्थाभावस्तथाऽऽसीद् यत्प्रवेशशुल्कदानानन्तरं द्वित्राण्येव पुस्तकानि क्रेतुं मम सामर्थ्यमभूत् । साहसम्, उत्साहः प्रभुम्प्रत्यचलो विश्वास इमान्येव मम निधानान्यभूवन् । परं

वारं वारमियं चिन्ता मम मानसं व्याकुलीकरोति स्म 'यत्प्रतिमासं विश्वविद्यालस्य शिक्षाशुल्कव्यवस्था कथं सम्पत्स्यते इति । अत्र विषये साह्याय कस्यापि पुरतो चर्चाविधानमपि मम स्वभावविरुद्धमभवत् ।

अत्रैव दिनेष्वेकदा शुल्कमुक्त्यर्थमावेदनाय काचित्सूचना विभागीयसूचनापट्टके मयावलोकिता । एतदर्थं निर्धारितमावेदनप्रपत्रमानीय पूरयित्वा तन्नीत्वाहं संस्कृतविभागाध्यक्षपदमधितिष्ठतां डॉ० सत्यव्रतसिंहमहोदयानामन्तिकं संस्तुत्यर्थं प्राप्तः । शुल्कमुक्त्यावेदनपत्रसहितं मामवलोक्य 'किमस्ति ?' इति ते समपृच्छन् । प्रयोजने निवेदिते पुनस्तेऽकथयन् यत् 'किं मनुषे मम हस्ताक्षरेण (संस्तुत्या) कार्यमिदं सम्पन्नमेव स्यात् ?' मयोत्तरितं 'न तथा मन्ये, तथापि निवेदये मम साहाय्यं विधेयम् ।' अत्रैव समये मया स्वीया स्थितिरपि तेषां पुरतो निवेदिता । ते मौनमेवावलम्बमानास्तत्रावेदनपत्रे हस्ताक्षराणि विधाय विभागाध्यक्षत्वबोधिकां स्वीयां मुद्रामपि स्वयमेव तत्र निवेशितवन्तः । मया च तदावेदनपत्रं यथास्थानं प्रापितम् ।

अचिरादेव शुल्कमुक्तिघोषणा प्रकाशिता । मम नाम तत्र सर्वेषूपर्येवाभवत् । ततो न केवलं मम शुल्कचिन्ता निराकृता, परं प्रथमतो दत्तस्य शुल्कस्य राशेः प्रत्यावर्त्तनेन परीक्षाशुल्कप्रबन्धचिन्ताप्यपाकृता । कञ्चित्कालानन्तरमेकदाहं केनापि प्राध्यापकमहोदयेन प्रेरणापूर्वकं सूचितः निर्धनच्छात्रेभ्यः पुस्तकाद्यर्थमनुदानं दीयमानमस्ति, तदर्थम्मयाऽऽवेदनपत्रं दातव्यम् । तथाकृते सति पुस्तकाद्यर्थमपि व्यवस्था जाता । अत्र प्रसंगे प्रेरणापुरस्सरं सूचना मयाऽमीषां निर्देशेनैव लब्धासीत् । एवं प्रत्यक्षतो मां कदापि किमप्यनुक्त्वैव ते विविधैरुपायैर्ममाध्ययने साहाय्यमाचरन् । मध्ये मध्ये कक्षायां शास्त्रविषयकैः प्रश्नैः कदाचिच्च प्रश्नानां समाधानैः ममाध्ययनकर्मणि प्रेरणाभूताः प्रत्यक्षत एवाभवन् । द्वितीये वर्षेऽप्येतादृशैः सौविध्यैः सह आवेदनपत्रं विनैव महाराजाकालाकांकरच्छात्रवृत्तिरपि तेषामनुकम्पया मयावाप्ता । तदेवं तेषां करुणावर्षामृतैर्मम वर्षद्वयस्याध्ययनकालो निर्विघ्नं सुतरां पूर्णतामगच्छत् । एम. ए. परीक्षापि मया प्रथमश्रेण्यां द्वितीयस्थानावाप्तिपूर्वकं समुत्तीर्णा । तदिदं सर्वमपि तेषां करुणाफलमेवासीत् ।

'एम. ए.' परीक्षायामेवंविधेन साफल्येन मे मनसि 'पी-एच. डी' इत्युपाधयेऽनुसन्धानार्थमाकांक्षाऽङ्कुरिता सती प्रवर्धमानाऽभवत् । परं मम पुरतस्ततोऽप्यावश्यकमासीत् परिवारस्य भरणपोषणायाजीविकाऽन्वेषणम् । अनु-

सन्धानकर्मणि छात्रवृत्तिरपि मया लब्धुं शक्याऽऽसीत्, परं तन्निर्णये कालोऽपेक्ष्यते स्म । अथापि छात्रवृत्तिः प्रतिमासं यथावसरं निश्चिते दिवसे लभ्येत, इदमपि न भवति निश्चितम् । पारिवारिकेभ्यः शिशुभ्यस्तु भोजनाच्छादनादि प्रतिदिनमावश्यकमिति मत्वा मया सर्वप्रथममाजीविका साधनीयेति निर्णीतम् । मुजफ्फरपुरमण्डलान्तर्गते शामलीनगरे एकस्मिन्महाविद्यालये व्याख्यातृपदं मया प्रथम एव साक्षात्कारमये प्रयासे समवाप्तम् । परन्त्वनुसन्धानकार्यसौकर्याय वर्षमध्य एव तत्परित्यज्य मया दिल्लीस्थराजकीयविद्यालये ततोऽवरे पदे एवाध्यापनकार्यं स्वीकृतम्, अथाहं प्राप्तो गुरुवर्याणामेतेषामेवान्तिकमनुसन्धानार्थप्रवेशाय । प्रवेशार्थमावेदनपत्रं च मया प्रापितम् ।

एष्वेव दिनेषु मम केचन ज्येष्ठाः सतीर्थ्याः न जाने कया भावनया प्रेरिता अनर्गलमेव डॉ० सत्यव्रतसिंहमहाभागानां विषये परिवादपरास्तथाऽभाषन्त यथा मम मनसि 'इमे ब्राह्मणविद्वेषिण' इति भ्रमं जनयितुं प्राभवन्, अब्रुवंश्च यन्मयाऽनुसन्धानकार्यं डॉ० सिंहमहोदयानामन्तेवासितया न प्रारब्धव्यम्, अन्यथा तत्कदापि पूर्णतां न यास्यति ।" अहं च तेषां वचोभिर्मूढभावापन्नो गुरुवर्याणां सर्वमप्यौदार्यं साहाय्यं च विस्मृत्य असत्परामर्शमपि सत्परामर्शमिव मन्वानो तेषाम् (डॉ० सत्यव्रतसिंहमहोदयानाम्) अन्तिकं गत्वा प्रावोचं यद् "अहं ममानुसन्धानकार्यं डॉ० बनर्जीमहोदयानामन्तेवासितया कर्त्तुमिच्छामि । किमिदं परिवर्त्तनं सम्भवति ?" करुणामूर्तयो गुरुवर्यास्तु मम मूढतायां कामपि प्रतिक्रियामदर्शयन्तस्तथा कर्त्तुं स्वीकृतिमदुः ।

एषु दिनेष्वहं दिल्लीनगरे सेवानिरत आसम् । भृतिस्तु स्वल्पीयस्येवासीत् । कुटुम्बभरणव्यवस्थार्थमर्थसौकर्याय किमप्यपरमपि कार्यं करणीयमिति प्रतीयते स्म । अस्यामवस्थायां प्रति पञ्चदशाहं प्रतिमासं वा लक्ष्मणपुरं गत्वा कृतस्यानुसन्धानकर्मणः संशोधनं भाविकार्याय निर्देशग्रहणं च दुष्करमासीदिति ममानुसन्धानकार्यं पुनरवरुद्धमिवाभवत् । अथैकदा गुरुवर्याः डॉ० सिंहमहोदयाः जोधपुरविश्वविद्यालये चयनसमितौ राज्यपालप्रतिनिधितया भागं ग्रहीतुं गच्छन्तो मध्येमार्गं दिल्लीनगरे डॉ० धर्मेन्द्रनाथशास्त्रिमहोदयानामावासे विश्रामार्थं समायाताः । तत्रैवावासे शास्त्रिवर्यैरेव संस्थापितस्य भारतीयविद्यासंस्थानस्य पुस्तकालयोऽप्यासीत् । अहञ्च तत्र पुस्तकालये प्राप्त इति गुरुवर्याणां साक्षात्कारोऽनायासमेवाभवत् । प्रणामाशीर्वचनानन्तरमन्ते ममानुसन्धानकर्मणि प्रगतिमधिकृत्य पृष्टवन्तः । मया च यदा स्वस्थितिर्निवेदिता

तदा ते पुरा मयोदितं सर्वमपि विस्मृतिपक्षे निधाय मां कृतं कार्यं दर्शयितुमब्रु-वन् । तथा कृते सति ते यथाविधि संशोधनं कृत्वा किमग्रे कर्त्तव्यम्, कथ-ञ्चेदं शीघ्रं विशिष्टगुणोत्कर्षञ्च दधत्पूर्णतामियादिति कामनया पाथेयभूतं सर्वमपि मां निर्दिष्टवन्तः ।

तद्दिनादारभ्य यदापि ते दिल्लीमार्गेण कुरुक्षेत्रविश्वविद्यालये, राज्यपाल-प्रतिनिधितया राजस्थानप्रदेशे स्थिते कस्मिन्नपि विश्वविद्यालये केनापि प्रयोजनेनाऽगच्छन् तदा मध्येमार्गं गमनप्रत्यागमनवेलयोः विश्रामव्याजेन दिल्ली-नगरे दिनमेकमुषित्वा ममानुसन्धानकार्यं निरीक्षणार्थमवश्यं निरधारयन् । एवं तेषां कृपापूर्णेन मार्गदर्शनेन ममानुसन्धानकार्यं द्वयोरेव वर्षयोर्मध्ये पूर्ण-तामयासीत् । १९६४ ख्रिस्ताब्दस्य दिसम्बरमास एव च दीक्षान्तसमारोहे 'पी-एच. डी.' उपाधिरपि मयाधिगतः ।

एतदनन्तरमपि दिल्लीनगरे मम सेवासमये प्रयागेऽपि च यदापि ते दिल्लीं प्रयागं वा प्राप्ताः सदैव ममावासमागत्य वात्सल्यमयेन स्नेहेन मां सभा-जयन्ति स्म । 'सम्प्रति किन्त्वया क्रियते (लिख्यते)' इति प्रश्नमाध्यमेन प्रस-ङ्गमुत्पाद्य शास्त्रचर्चामारभ्य तत्र विषये गभीरगभीरं विवेचनं कुर्वन्तो शास्त्रग्रन्थीनुद्घाटयन्तो मम लेखनकर्मणि पाथेयविधानमकुर्वन् । यदा चाहं कदाचित् तेषामावासं प्राप्तः ते शास्त्रानुशीलने लेखनकर्मणि वा व्यापृता अदृश्यन्त, अश्रावयंश्च ताभ्यस्ताभ्यः कृतिभ्यः खण्डविशेषान् । एतादृशीषु कृतिषु आनन्दवर्धनकृतं ध्वन्यालोकम् अभिनवगुप्तकृतं तत्र लोचनञ्चाधिकृत्य तेन विरचितो ग्रन्थः '**ध्वन्यालोकलोचनोन्मेष**' नामाऽन्यतमः, यो दिल्लीस्थ-इन्दुप्रकाशन—नामकात्प्रकाशनसंस्थानात्[1] प्रकाशितः । अन्ये च तेषां कतिपये ग्रन्था अप्रकाशितास्तिष्ठन्ति ।

मादृशास्तेषां शतशश्छात्रास्तेषां कृपया पालिताः संवर्धिता बहुत्र महनी-येषु पदेषु प्रतिष्ठिताः तेषामेव दीप्त्या दीपिताः स्वस्वक्षेत्रेषु कर्मसु निरताः सन्ति ।

अवधूतश्री-'भगवान् राम'—महोदयं प्रति तेषाम्महती श्रद्धा आसीत् । अमीषां 'सर्वेश्वरीसमूह'-नाम्न्यः संस्थायास्ते सार्वदेशिका उपाध्यक्षा अभूवन् । अवधूतमहोदयाः स्वयम् अस्याः संस्थाया अध्यक्षाः सन्ति । वाराणस्यां राज-

१. इन्दु प्रकाशन ८/३ रूपनगर, दिल्ली—११०००७

घाटस्थले गंगातटेऽस्याः संस्थायाः प्रधानं केन्द्रमस्ति । कुष्ठाश्रमश्च तत्र कुष्ठरोगिणां चिकित्सासेवापरिचर्यार्थं चिरात्प्रवर्त्तमानमस्ति । अस्माकं गुरुवर्याः डॉ० सत्यव्रतसिंहमहाभागाः बहुधा तत्र गत्वा सप्ताहं दशाहं पञ्चदशाहं वा उषित्वा स्वस्नेहेन तत्र स्थितान् रोगिण आप्लाव्यानन्दयन्ति स्म । एवं तेषाममृतमयोऽहैतुकः करुणाप्रवाहो न केवलं माम्, परं सर्वमपि शिष्यवर्गं पार्श्ववर्त्तिनश्च जनान् सततमाप्लावयन् तानुज्जीवयति स्म ।

हा ! अद्य,

"काष्ठान्तकुम्भीन्द्रसुकुम्भमण्डलमण्डायमानस्तनागसम्भवः ।
आस्तिक्यकार्त्तस्वरभूषयान्वितः सन्दृश्यते नो सहसा तिरोहितः ॥"

—०—

द्वारकाप्रसाद शर्मा
लखनऊ

## वपुर्नश्वरं तत्कृतयः प्रकाशिकाः

१

विभूतिमन्तः पुरुषा धरातले, आयान्ति सामान्यजना इवाखिलाः ।
सम्पाद्य कृत्यानि प्रयान्ति लोकतः, वपुर्नश्वरं तत्कृतयः प्रकाशिकाः ॥

२

नैवास्ति तेषां जगतीह मोहः सांसारिके कार्यसमूहजाते ।
लक्ष्यं यदेवास्ति सुनिश्चितं कृतं, प्राप्त्यै तदेवास्ति वपुस्तु कारणम् ॥

३

असंख्यबाधाः पथि संविशन्ति, न ताः कदाचित् परिचालयन्ति तान् ।
लक्ष्यात् स्वकीयान्नतु नैव भिन्नं, संदृश्यमानं भवतीति तादृशान् ।

४

धन्या जनास्ते प्रभवन्ति ये स्वे, लक्ष्यार्थपूर्त्यै परमप्रयासैः ।
कुर्वन्ति नूनं जगतीह तत्तद्, कल्याणनिःश्रेयसभाजनं तु यत् ॥

५

सत्यव्रतानां सुधियां तु श्रीमतां, जन्मापि जातं किमिहार्थमत्र ।
नैवास्ति किंचिन्न हि यत्तु ज्ञेयं, गीर्वाणवाण्यां विचरत्सु सत्सु ॥

६

सरस्वतीश्री समुपासकेषु, सत्यव्रताः सिद्धव्रता इव स्थिराः ।
हौमायितं तैस्तु जनुः स्वकीयं, गीर्वाणवाणीं परिणेतुमुच्चताम् ॥

७

के के न सन्तीह त्वदीयशिष्याः, ये ये न मनुते गुरुतां त्वदीयाम् ।
सान्निध्यमेवापि कदापि यैस्तु, लब्धं प्रलुब्धाः परिदृश्यमानाः ॥

८

को वा नरो यो गणयेद् गुणावलिं, विभूतिभिर्भूषितविग्रहाणाम् ।
नृणां तु येषां धरणीतलेऽस्मिन्, समागतं स्वागतमेव योग्यम् ॥

९

विभूतियोगे भगवद्वचस्सु, श्रुतं भवद्भिः किमुदीरितं च ।
विभूतिमद्यत् भवतात्तु श्रीयुतं, सत्त्वं तदेवास्ति ममैव रूपम् ॥

१०

नैवास्ति तेषां सुधियां शरीरं, स्थूले स्वरूपे यदि वर्तमानम् ।
किं नास्ति तेषां स्मृतयस्तु सूक्ष्माः, वपुर्नश्वरं तत्कृतयः प्रकाशिका ॥

११

वयं नुमस्तं परमप्रकाण्डम्, विद्वद्वरेण्यं, सुधियां समाश्रयम् ।
स्मृत्यंकमेतत् भवतां सुकीर्त्तिं, प्रकीरयेत् नोऽस्तु सश्रद्धवन्दनम् ॥

—०—

डॉ० वीरभद्र मिश्रः
लखनऊ

# डॉ० सत्यव्रतसिंहः -एकं मूल्यांकनम्

यद्यपि अहं डॉ० सिंहमहोदयस्य शिष्यत्वं स्नातकोत्तरकक्षासु वर्षद्वयं यावदनुभूतवान् किन्तु परिस्थितय एतादृश्यः संजाता यदहं तस्य सान्निध्यं न लब्धवान् । तत्र वस्तुतो हेतुद्वयमासीत् । संस्कृतविभागेऽहं सर्वप्रथमं प्राच्य-विभागस्य छात्रोऽभूवम् । विभागीयपरिषदि प्रायः स्नातकोत्तरच्छात्राणां प्राच्य-विभागच्छात्राणां च मध्ये एका प्रतिस्पर्धा भवतिस्म । प्राच्यविभागच्छात्र-त्वाद् आधुनिक-विभागाध्यापकान् प्रति मम तावती श्रद्धा न प्रादुरभवत् । डॉ० सिंहमहोदय एव तेषु दिनेषु संस्कृतज्ञानवर्धिन्या विभागीयपरिषदः कार्यं पश्यति स्म । प्राच्यविभागीयाः शिक्षका अल्पवेतनं लभमाना आधुनिक-विभागशिक्षकान् प्रति सौमनस्यं नाधारयन् । तस्य प्रभावो ममापि उपरि अपतत् । पश्चाद् आधुनिकविभागे छात्रो भवन्नपि डॉ. सिंहं प्रति पूर्वं भावं त्यक्तुं नाहं प्राभवम् । द्वितीयं कारणमिदं प्रतीयते यत् तेषु दिनेषु विभागे गुरूणां गुरवः अय्यरमहोदयाः, शरीरबद्धं शास्त्रं डॉ. कान्तिचन्द्र पाण्डेया अपि आसन् । अहं चैकः ग्राम्य - पारम्परिक - पण्डितपरिवारादागतः स्वसंस्का-रानेव जगन्नियामकान् मन्वानः किशोर आसम् । डॉ० सत्यव्रतश्च पूर्णतया आधुनिकः प्रगतिशीलश्चासीद् ।

अस्तु, सम्प्रति संस्कृतभाषाप्रचारमाध्यमेन स्वजीवनं सार्थकं कर्तुं चेष्ट-मानेन मया यदनुभूतं यच्च विचारितं तेनाहं डॉ० सिंहस्य अवदानं सम्यग् अवधारयितुं शक्नोमि । यद्यपि स विभागाध्यक्षतां अय्यर-पाण्डेययोः दिग्गजयोः पश्चात् प्राप्तवान् इति झटिति तस्य नाम प्रकाशं नाप्तवत् किन्तु तेन पाठ्य-

क्रम-विषये मौलिकं चिन्तनं कृतम् । एतादृशं चिन्तनं न तु तस्य पूर्वभाविभ्यां नैव वा उत्तराधिकारिणा कृतम् । वाग्भटालंकारस्य स्थाने साहित्यदर्पणम्, मुद्राराक्षसस्थाने अपरं नाटकं विधाय, कतिपयवर्षानन्तरं पुनः यथास्थितिस्थापनं चिन्तनं वक्तुं न शक्यते ।

डॉ० सिंहमहोदयेन सर्वप्रथमं विभागे संग्रह-प्रणाली प्रवर्तिता काव्यशास्त्रसन्दर्भसंग्रहः, महाकाव्यसन्दर्भसंग्रहः इत्यादीनां माध्यमेन स छात्रेभ्यः संस्कृतसाहित्यस्य विस्तृताः स्थलीः दर्शयितुमचेष्टत । यदि कोऽपि वनदर्शनाय गच्छति अथ च तस्यैकस्मिन् कोणे स्थितान् सर्वान् पादपान् सतृणं द्रष्टुं प्रेर्यते आदिश्यते च तदा स उद्विग्नो भवत्येव । यदि तस्मै वनस्थिताः बुद्धिमत्तया चिताः स्थल्यः क्रमात् प्रदर्श्यन्ते तदा न केवलं स अनुद्विग्नः तिष्ठति अपितु रसमपि लभते । संस्कृतसाहित्यस्य दौर्भाग्येषु एकं सम्पादकानाम् अभावोऽपि वर्तते । यद्यपि प्राचीनकाले एतादृशा जना आसन् । वेदे ये ऋषय उक्ताः ते सम्पादका एव आसन्, तस्मात्तेषां कृतित्वं न मन्यते ।

यद्यपि एतेषां संग्रहाणाम् अध्ययनेन प्रगाढं पाण्डित्यं न लभ्यते, यल्लभ्यते, तत् पारम्परिकैः पल्लवग्राहिपाण्डित्यमित्युक्त्वा उपहस्यते, तथाऽपि मम मतेन पाण्डित्यं स्वाध्यायेन आगच्छति न अध्यापनेन । अध्यापकस्य दायित्वं तु विषयं प्रति रुचिजननमात्रम् । रुचिजननं च संग्रहैरेव इति मम मतिः ।

संग्रहाणामनेकेऽपरेऽपि लाभाः । छात्राः स्वरुच्यनुसारं स्वाध्यायाय विषयं चेतुं विस्तृतं क्षेत्रं लभन्ते, कूपमण्डूकता च नश्यति द्वित्रमहाकाव्यानां प्रथमसर्गाध्यायाध्यापनापेक्षया पंचविंशतिमहाकाव्यानां मनोहर-स्थलानामध्यापनं छात्रस्य बौद्धिकं विकासं करोत्येव । पुनः च संस्कृतस्य वैपुल्यम्, वैविध्यं विकासशीलता च संग्रहैः स्फुटीभवति ।

अस्तु, डॉ० सत्यव्रतमहोदयस्य अवकाशग्रहणानन्तरं पाठ्यक्रमः पुनः प्राचीनामेव परिपाटीं प्राप्तः । बहुकालं यावत् पाठ्यक्रमे जडता एवासीत् । एतादृशी जडता या शिक्षकाणां स्वभावेऽपि बद्धमूलाऽभूत् । नवीनं पाठ्यक्रमं ते "अस्माकं परिश्रमो भविष्यति" —इति विरुन्धन्ति । गतानुगतिकतया विषयो नश्यति न तु विकसति । हर्षस्य विषयो यत् तदन्तेवासिनो डॉ० जगदम्बाप्रसादस्य पदप्राप्त्यनन्तरं डॉ० सिंहस्य प्रणाली पुनः प्रारब्धा, पाठ्यक्रम-विषये सार्थकं चिन्तनं क्रियते ।

सोऽध्ययनाध्यापनादतिरिक्तमपि संस्कृतभाषाया विषयेऽचिन्तयदिति मम विचारान्महत्त्वपूर्णम् । संस्कृतभाषायाः पण्डिताः प्रायः कठिनभाषां प्रयुज्य पुत्रोत्सवं मन्यन्ते । अहं स्मरामि एकेन पंडितेन सगर्वं स्मयमानेनाहमुक्तः—"अहमेतादृशं संस्कृतं वक्तुं समर्थो यत् त्वं किं तव गुरुरपि बोद्धुं न समर्थः !" मया विचारितं कथितं च—तस्मादेव कोऽपि संस्कृतपण्डितान् न शृणोति । डॉ० सत्यव्रतोऽपि एतादृशेभ्यः पण्डितेभ्यो जुगुप्सते स्म । संस्कृतायाः सरलीकरणे तस्य महान् अभिनिवेश आसीत् । स प्रायः स्वरचितप्रश्नपत्रेषु 'वरं संस्कृतभाषायाः सरलीकरणं न वा' विषये निवन्धं लेखितुमवश्यमकथयत् । स्वभाषणेष्वपि अस्योपरि बहुबलं दत्तवान् । द्विवचनं दूरीकर्तुं स प्रायः उक्तवान् । अधुना अनेकैः संस्कृतप्रचारकैः अयमुपाय आश्रितोऽपि । यद्यपि नाहमिदमुचितं मन्ये तथाऽपि प्राश्निकत्व-परीक्षकत्व-प्रभृतितुच्छकार्येष्वव्यापृतेषु बहुषु विभागाध्यक्षेषु तस्य संस्कृतप्रचारचिन्तैवास्मादृशानां कृते प्रेरणादायिका ।

विद्याभ्यासदृशाऽपि स प्रगतिशील आसीत् । प्रायो दृश्यते साम्प्रतं निष्प्रयोजनीयं पिष्टपेषणमात्रं वेदान्तादिषु व्याकरणे, माघश्रीहर्षादीनां रसादीनपि वैचित्र्यमात्रविश्रान्तान् अलंकारवत् प्रदर्शयतां काव्ये च पद-पदार्थ-परिष्कारं, लोकोपयोग-शून्यं कल्पनाविलासं विदधति विद्वांसः । डॉ० सत्यव्रत एतद्विपरीतं पांडित्यपाखण्डरहितं सारं वस्तु एवं प्रतिपादयितुं कृतादाराः । एतद् दृष्ट्या सर्वं साहित्यं नवीननिकषे कषणीयमिति तस्य दृष्टिः । अजस्रायां प्रकाशिता भारविविषयकाः तस्य लेखः तस्य प्रमाणम् । विचित्रमार्गं प्रति मम जुगुप्सा; तस्याऽपि सैव दृष्टिरासीद् । अखिलभारतीयसंस्कृतपरिषदि साहित्यविषयकविचारविमर्शाय तेन एका साहित्यिकगोष्ठीपरम्परा चालिता । तत्रैकस्यां गोष्ठ्यां माघविषयकान् मम विचारान् श्रुत्वा प्रसन्नः हसन् अब्रवीत्—इदं तु माघेन स्वयं प्रतिपादितम् । तस्य दृष्ट्या कविः स्वतस्फूर्ततया न लिखति अपितु क्लेशेन लिखति, स्वपिति पुनः लिखति—'क्षणशयितविबुद्धः चिंतयत्यर्थजातम्' ! सर्वे पारिषद्या उन्मुक्तं हसितवन्तः । इयं दृष्टिः पण्डितेषु दुर्लभा ।

—०—

डॉ० बृजेशकुमारशुक्ल:
लखनऊ

# श्रीसत्यव्रताष्टकम्

यस्यानने सरसपञ्चमनादकर्त्री
वाणी विपञ्चिमधुरं स्वरमालपन्ती ।
रेजेतराञ्च नितरां श्रियमुद्‌वहन्तं
तं पूज्यसत्यव्रतसिंहगुरुं नतोऽस्मि ।।१।।

सम्प्राप्य यः परिषदं कविकोविदानां
पुंस्कोकिलो विबुधवाङ्‌मयमाचुकूज ।
साहित्यदर्शनसुधारसमादधानं
तं मान्यसत्यव्रतसिंहगुरुं नतोऽस्मि ।।२।।

शास्त्राम्बुधौ मथनजातरसामृतौघं
पीत्वाऽभवच्च विदुषां हि शिरोमणिर्यः ।
शिष्यैर्बुधैश्च शिरसा परिपूज्यमानं
तं वन्द्यसत्यव्रतसिंहगुरुं नतोऽस्मि ।।३।।

यस्याननाम्बुजरजोऽमृतवाहिवाणीं
श्रुत्वाऽभवंश्च सुधियो मतिमूढचित्ताः ।
अङ्गीचकार मनसा निगमागमान् यः
तं प्राज्ञसत्यव्रतसिंहगुरुं नतोऽस्मि ।।४।।

यौष्माकपादजलजाततरीं तु लब्ध्वा
मोहाम्बुधिं सर इवेत्यतरंश्च शिष्याः ।
ज्ञानप्रकाशयशसाऽखिललोकपूज्य !
त्वां श्रीलसत्यव्रतसिंहगुरो ! नतोऽस्मि ॥५॥

यस्याङ्घ्रिकञ्जमकरन्दरसं निपीय
विद्वज्जना मधुकरा इव प्राननन्दुः ।
दिव्यं स्फुरन्नखररत्नमयूखपादं
तं स्तुत्यसत्यव्रतसिंहगुरुं नतोऽस्मि ॥६॥

अध्यक्षतामिह वहन् सुरवाग्विभागे
आजीवनं सुरगिरो विदधे च सेवाम् ।
काश्यां तु यः कुलपतेः पदवीं बभार
तं विज्ञसत्यव्रतसिंहगुरुं नतोऽस्मि ॥७॥

सर्वाञ्जनान् प्रति सदा करुणार्द्रचित्तं
सौहार्द्रपूर्णविधिना व्यवहारदक्षम् ।
सम्प्राप्तमीशपदवीं खलु मोक्षसञ्ज्ञां
तं दिव्यसत्यव्रतसिंहगुरुं नतोऽस्मि ॥८॥

—०—

डॉ० (श्रीमती) शशि तिवारी
दिल्ली

# गुरुपादाः डॉक्टरसत्यव्रतसिंहमहाभागाः

एकषष्टितम ईसवीयाब्दे प्रथमवारं यदा मया लक्ष्मणपुरविश्वविद्यालये बी.ए. पूर्वार्द्धे प्रवेशो लब्धस्तदा प्रथमवारं संस्कृतविभागाध्यक्षस्य डॉ० सत्यव्रतसिंह-महाभागस्य नामश्रवणं कृतम्। स्नातकपरीक्षायां द्वितीयस्थानेन साकं यदा समानरूपेण सर्वेष्वपि विषयेषु समानाङ्काः मयाऽधिगताः तदा स्नातकोत्तर-कक्षायां विषयचयनं एका समस्या जाता, परं सिंहमहाभागानां प्रति श्रद्धैव संस्कृतविषयचयने कारणीभूताऽऽसीत्। तदनन्तरमष्टषष्टितमाब्दं यावत् पी-एच० डी० उपाध्यर्थं शोधकार्यानुष्ठानं यावत् लक्ष्मणपुरविश्वविद्यालयेन सह सम्पृक्ताऽहमासम्। तत्र छात्रजीवने नैकवारमध्ययनस्वाध्यायादिव्याजैः सिंह-महाभागैस्सह मदीयः सम्पर्कोऽतीव सहायी सिद्धः। महाभागैर्विरचितपुस्तकेषु मुद्राराक्षसम्, साहित्यदर्पणञ्च तदैव मया अधीते।

शोधप्रबन्धस्य कृते विषयनिर्धारणार्थं विहितः साक्षात्कारोऽधुनाऽपि प्रत्य-क्षीभूत इव प्रतिभाति मे। सिंहमहाभागेन साक्षात्कारे नैके छात्राः तेषां मनो-योगं धारणाश्च ज्ञातुमनुत्साहिताः। किन्तु स्नातकोत्तरपरीक्षायां सर्वप्रथम-स्थानभाजाऽहमासम्, तस्मात् महदनुग्रहेण मह्यं विषयप्रारूपः सम्प्रदत्तः। तेषा-मेव मार्गदर्शने मया शोध-प्रबन्धः पूरणीय इत्यासीत् प्रमुखं प्रेरणासूत्रं मत्कृते। एकदा शोधविषयस्य काठिन्यमनुभूय विषयपरिवर्त्तनार्थं यदा गुरुपादाः सम्प्रा-र्थितास्तदा तैः सस्नेहम् आशीराशिभिश्च प्रतिपादितं—"काठिन्यपरिपूर्णेषु विषयेष्वेव बुद्धिमतां भवति परीक्षा, तस्मादनुत्साहो नैव प्रदर्शनीयः" इति। तेषामाज्ञावचांसि श्रुत्वा दुष्करजालजञ्जालपूर्णमध्वा शोधप्रबन्धस्य सरली-भूतः।

योग्यप्रशासकरूपेण तेषां मूर्तस्वरूपं मत्समक्षं वारं वारं प्रस्फुटीभवति । लक्ष्मणपुरविश्वविद्यालयस्य कलासङ्कायस्य 'डीन' पदं महाभागैरलङ्कृतम् यदा, तदा कदापि नैकविधकार्येषु तेषां पार्श्वे विलम्बो जातः इति नैव स्मरामि । विषयेऽस्मिन् मयैका घटना स्मर्यते । विश्वविद्यालयेऽध्ययनावसरे मया सप्त-स्वर्णपदकानि जितान्यासन्, सर्वत्रैव समेषां तेषां प्रदर्शने काठिन्यवशात् यदा पृष्टाः निवेदिताश्च गुरुपादाः, तदा एनं प्रमाणयितुं सोत्साहमाशीराशिभिश्च सह तैः प्रमाणपत्रं मह्यमर्पितम् । प्रमाणपत्रमेतत् तत्र भवतां वैदुष्यपरिपूर्णस्य सुकोमलस्य व्यक्तित्वस्य निदर्शनमेव प्रतिभाति मे । छात्रान् प्रति तेषां सौम-नस्यभावनायाः औदार्यस्य चायं प्रतिकृतिरासीदिति मे विश्वासोऽस्ति । न केवलं योग्यप्रशासकरूपेण परं सहृदयेष्वपि मूर्ध्नि स्थानभाक् स आसीत् । तैः सह नाट्यकर्मणि संलग्नैः छात्रैः छात्राभिश्च उज्जयिनीप्रवासावसर इदमनु-भूतम् । कालिदाससमारोहे मालविकाग्निमित्रस्य मञ्चनार्थमेकं बसयानं उज्ज-यिनीं प्रति प्रस्थितम् । तस्मिन् महाभागैः साकमन्ये विद्वांसो गुरुजनाश्च-यथा डॉ० बनर्जी, डॉ० सिन्हा, जजसाहब, डॉ० कालिया, डॉ० अमलशिबपाठकः, डॉ० अभयमित्रश्च आसन् । बसयानस्य पुरोभाग आसन् गुरुजनाः, मध्ये बालिकाः छात्राश्च, पृष्ठभागे बालकाः छात्राश्च । डॉ० सिंहमहाभागान् प्रति भयेनादरेण च बसयात्रायां सर्वेऽनुशासिता अल्पभाषिणश्चासन्, केवल शिष्टं गानम् संयतो वार्तालाप एव प्रचरति स्म । परं यदा यात्राकाले रात्रौ सर्वे निद्रायिताः, वाहकेन जागरणस्यावश्यकता सुरक्षाकारणेन प्रतिपादिता, तदा डॉ० सिंहमहाभागैः सहर्षं सपदि आदिष्टम् 'किञ्चिदपि गायत' । अचिरादेव डॉक्टरकालियामहाभागस्य मधुरो भावप्रवणश्च स्वरो गुञ्जितः 'ताँ की मैं झूठ बोलिया, कोई ना, भई कोई ना भई कोई ना'; अनन्तरं तेन सह समू-होऽपि मुखरीऽभूत् । उज्जयिनीं प्रस्थितैः छात्रैस्सह तेषां महाभागानां मनो-विनोद आचरणं हास्यादिकं सर्वमपि व्यवहारजातं मूर्त्तरूप इव मत्समक्षं समु-पस्थितमस्ति इति मन्ये ।

विषयेऽस्मिन् न काप्यतिशयोक्तिरस्ति यत् स्वकीये शैक्षणिके जीवने यत्किमपि मयार्जितं मनसा वाचा कर्मणा च प्रतिपादितं तत्खलु सर्वमेव गुरु-पादानां डॉक्टरसत्यव्रतसिंहमहाभागानामाशीर्वादेनैव लब्धं नान्यथा ।

—०—

डॉ० कृष्णकुमारमिश्राः
लखनऊ

# स्मृतित्रितयम्

१

तत्त्वं विदित्वा चिदचिद्विशिष्टं
व्याख्यायसे काव्य-विधि-प्रकाशम् ।
नेनीयसे धर्मप्रथां सधस्थं
सत्याय सत्यव्रत ! हे ! नमस्ते ॥

२

संस्कारहेतावथ देववाचा-
माचार्यकस्त्वं प्रथितस्त्रिलोक्याम् ।
सिंहस्य मित्रं त्वं चाऽग्रमूर्ति-
स्सत्याय सत्यव्रत ! हे ! नमस्ते ॥

३

आङ्ग्लेषु चाऽङ्ग्लः नवदेशिकस्त्वं
पूर्वेष्वपूर्वोऽसि पुराकथाकृत् ।
त्वां ज्ञातुमर्हस्यथ श्रीप्रदस्त्वं
सत्याय सत्यव्रत ! हे ! नमस्ते ॥

(स्व०) डॉ० सत्यव्रतसिंहः
लखनऊ

# वसन्तोत्सवश्लोकदशकम्

१

वसन्तलक्ष्मीरियमभ्युपैति
शीतार्तिसम्पीडितगात्रयष्टिः ।
दिनश्रिया सार्धमपश्रिया यत्
तल्लोकचेतांसि भृशं दुनोति ॥

२

न चण्डभानुः प्रखरांशुजालैर्
व्योम्नो वितानं विततीकरोति ।
न चन्द्रिकैवाऽपि च चन्द्रभानोः
विभावरीं पृच्छति सौख्यवार्ताम् ।

३

रसालसालेषु न मञ्जरीणां
रसोत्सवा दृष्टिपथं प्रयान्ति ।
पीताम्बरा भूषितगात्रयष्टिर्
न रन्तुकामा जनता चकास्ति ॥

४

वासन्तिकानामथ वल्लरीणां
नायाति पालित्यचिकित्सनाय ।
समीरवैद्यः स मधोः सहायो
नीहारपालेन रुजान्वितः किम् ॥

५

'सर्वं प्रियं चारुतरं वसन्ते'
इत्यादि काव्यं कवयन्तु पूर्वे ।
महाकवीनां कवयोऽपि कामं
किं त्वद्य किं चार्विति नैव विद्मः ॥

६

पुष्पं न फुल्लं वनिकालतानां
धूमायमानं प्रतिभाति बिम्बम् ।
रवेरिवेन्दोः परमत्र सर्वे
महं वसन्तस्य समाचरन्ति ॥

७

तनूनि वासांसि विहाय तूर्णं
गुरूणि वासांसि जनो भयार्तः ।
शीतप्रकोपेन सदैव धत्ते
मान्यस्तथाप्येष वसन्तकालः ॥

८

नीहारपाते प्रपतत्यजस्रं
सर्वं जगद्दुर्भगमेव जातम् ।
प्रवृद्धकोपं शिशिरं निशाम्य
मन्ये वसन्तः प्रपलायितः किम् ॥

९

बालं वसन्तं स्वमुपेयिवांसं
सन्तर्ज्य मन्ये शिशिरः प्रसक्तः ।
मनःसु निर्वापयितुं जनानां
वसन्तकाले रतिरागवह्निम् ॥

१०

यं पूर्वे ऋषयः सुखं शुभकरं कालं प्रकामं जगुः
यं पूर्वे कवयः स्वकाव्यकलया लोकोत्तरं चक्रिरे ।
यं वा बालवयस्कवृद्धजनता सम्भाव्य हृष्टा पुरा
सोऽयं वो वितरीतरीतु सुहृदो भद्रं वसन्तोत्सवः ॥

११

वसन्त ! क्षम्यतामेष मद्धाष्ट्र्यं परया मुदा ।
स्वागतं करवाण्यद्य श्वोऽवश्यं ह्यागमिष्यसि ॥

—०—

डॉ० कृष्णकुमारमिश्रः
लखनऊ

# 'सुब्राह्मणोऽसौ महान्'

न तत्र सूर्यो भाति न चन्द्रतारकाः
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥

श्रुतेरस्याः यो निहिताशयोऽस्ति तस्यानुसारेण ब्रह्म विश्वतेजोभ्योऽतिशायि परमतेजःस्वरूपं किमपि तत्त्वं वर्तते । ब्रह्मणोऽव्यतिरिक्तयत्तेजस्तत्त्वात्मकं लौकिकं मानवं स्वरूपं दृश्यते क्वचिल्लोके तन्नाम ब्राह्मणत्वमिति समासेन 'ब्राह्मण'–शब्दस्य फलितार्थः लभ्यतेऽस्माभिः लौकिकज्ञैः । अमुमेवार्थमुररीकृत्य वक्तुं शक्ष्यामो वयं यत्परमाचार्याः प्रातःस्मरणीयशीलशालिनः डॉ० सत्यव्रतसिंहा ऐहलौकिकानि कर्तव्यानि पूरयित्वा सब्रह्मणत्वं लब्धवन्तोऽथ शरत् (कार्तिकी)-पूर्णिमा-दिने (२०४५ विक्रमाब्दे) ब्रह्मसत्तयाऽद्वयतामवाप्नुवन् । सामान्य-स्वरूपेण भयजनका अथ त्वाभ्यन्तरे नितरां कोमलचित्ताः सुपुरुषास्ते मण्डिताः ब्रह्मवर्चसैव केवलं दृष्टाः लोकैस्तेषु तेषु मार्मिकजीवनावसरेषु । तेषां महतां सुब्राह्मणत्व-प्रकाशक-जीवनप्रसङ्गत्रयमत्र प्रस्तूयते । तथाहि—

उत्तरे भारते दहद्-दहत्सूर्यसमप्रभाः प्रोफेसर-सिंह-महोदयाः फतेहगढ़-महाविद्यालयस्य संस्कृत-प्रवक्तृपदकृते साक्षात्कारं कर्तुं समागताः । प्रत्याशिनः सोत्साहं तमभिमुखं गच्छन्त्यथ द्वित्रैरेव मिनटैरवनतमुखा बहिरागता विशेष-

ज्ञस्य दुर्धर्ष-स्वरूपं निर्भर्त्सयितुमहमहमिकया लग्नाः स्व-स्व-मानसखिन्नतां विनोदयन्तस्तिष्ठन्ति साक्षात्कारनिर्णयं प्रतीक्षमाणाः । आचार्यसिंहानां छात्रत्वेन तैस्सह परिचितोऽपि सन्तेषामुग्रतेजसा भीतभीत एवाहं क्रमप्राप्तः साक्षात्कार-स्थलं प्राप्तवानस्मि—प्रश्नाः पृष्टाः, यथा-कथञ्चिदुत्तरमपि दत्तमेवाऽथापि कस्मिन्नपि क्षणे स्वस्मिन्विश्वास एव नाऽऽयाति । परं हि सर्वस्मिन्नेव साक्षात्कारसमये लक्ष्मणपुर्यां सुख्याता भयङ्कराचार्याः (Giant Professor) नितरां कोमलतां धारयित्वा माधुर्यस्यन्दिन्या वाण्या निरन्तरमेव स्नपयन्ति माम् विस्मयविह्वलं कुर्वन्तः । आसायं समयमहं सूचनां लब्धवान् केनापि माध्यमेन यन्मम नियुक्तिस्तत्र संस्तुता । अन्वेषणं कृत्वाऽहं ज्ञातवान् प्रो० सिंहानां फतेहगढ़-रेल-स्थानाद् लक्ष्मणपुर-प्रस्थान-वेलाम् । रात्रौ रेल-स्थानमागत्य यदाऽहं तेषां दृष्टौ स्थितः भवामि मां पश्यन्त एवेत्थङ्गतास्ते गुरवः-"कृष्णकुमार, नियुक्तिं प्राप्तवानसि । अहं तव नाम-प्रस्तवनं कृतवान् यतो हि त्वं मदीय-शिष्यो भवस्यन्यथा सर्वेष्वेव साक्षात्कारदातृषु त्वं द्वितीय-स्थान-भागासीः । इदानीमिदं तवव कर्तव्यं भविता यद्भवाँ स्वात्मानं प्रथम - स्थानीयत्वेन प्रमाणीकरोतु ।" एतस्मिन्नन्तरेऽनुभूतं मया यथैतेषामाचार्याणां जातिसम्बन्धि सर्वमेव सिंहत्वं विगलितमथ सहजा मे श्रद्धा तं महान्तं सरल-ब्राह्मणं मत्वा साक्षात्तच्चरणयोः स्वयमेवाऽऽपतिताऽभूत् ।

आचार्य-सिंहमहोदयाः नैमिषारण्ये पुराणसंस्थान-निर्देशकत्वेन विराजन्ते । अत्रान्तरे सन्निकटवर्ति-ऋष्याश्रमे स्वामिश्री-नारदानन्द-सरस्वति-महोदयानां संरक्षकत्वे नैमिषपीठाधीश्वरस्य वेदव्यासस्य वर्णनां कुर्वद्भिः वक्तृभिराधुनिक-वेदव्यासत्वेन स्वामिपादानां नाम्नो याथार्थ्यं निश्चेतुमतिश्रमेण भाषणानि क्रियन्ते । स्वामिनो वेदव्यासतां प्रतिपादयितुमुद्गता आस्माकीनाः श्रीसिंह-महोदयाः स्वकीये विचारमहासागरेऽतिभूमिं प्रविष्टास्सन्तः अमुं महात्मानं वेदव्यासं स्वीकृत्यापि केनाऽप्यतिरिक्तालङ्कारेण अलङ्कर्तुकामाः सहसैव "नवीनो नारदोऽसा"—वित्यपि प्रमाणीकुर्वन्ति । सर्वोऽपि श्रोतृसमवायः "साधूक्तम्", "साधूक्तमि" ति पुनः पुनः प्रशंसयितुमारब्धः । परं हि द्वितीयदिने तेषामावा-समागत्य मोदी-भवनमहं गुरुभिस्सिंहैस्सह मिलित्वा तेषां पूर्व-दिन-वक्तृता-मधिकृत्य यावता साधुवचनानि प्रयोक्तुं वाच्छामि एतस्मात् प्रागेव ते गुरव इत्थङ्गताः—"कृष्णकुमार, ह्यः स्वामिपादानां कृते 'नारदे' तिसंज्ञामुक्त्वाऽहं तत्कालमेव विचारमग्नोऽभवङ्किम्मया सधूक्तमथवा कोऽपि परम्पराभङ्गः सम्पादितो मयोक्त्याऽनया ? इत्थमेव विचारयन्नहमासम्पूर्णरात्रं तांस्ताङ्ग्रन्था-

नुद्घाटयित्वेदानीमेव सप्रमाणं दृष्ट्वा स्वोक्तं तोषमाप्तवानस्मि यन्मया साधुतयैव तत्सम्बोधनं कृतमासीद्" इत्युक्तवतां तेषां मुखोपरि सात्त्विकी तोषमुद्रा सुस्थितिं गता । मात्राऽऽचार्यसहधर्मिण्या प्रदत्तां ज्वराङ्कुश-निर्मितां चायं पिबन्नहं तदा विचारयन्नासं यदस्यां वृद्धावस्थायां (७५ वर्षादप्यधिकतां गते वयसि) गतेष्वप्येतेषु गुरुत्तमेषु कीदृग्विधं शब्द-ब्रह्म-सेवा-समर्पणं विद्यते ?

आचार्याः मदीय-स्कूटर—द्वारा खूर्रमनगर-स्वाश्रमावासा-न्माडलहाउस-स्थित-विलाससदनं भवानीविहार-भवनं प्राप्ताः । स्वाऽऽवासप्राप्तेः (भवानी-बिहारावासं) प्राक्समाचारपत्र - पठित - सूचनाधारे प्रश्नं कृत्वा तैरभिज्ञातं मन्मदीयः शिष्य एको नाटयप्रयोगं करोति तस्मिन् दिने रवीन्द्रालये । तेषु दिवसेषु तेनच्छात्रेण सह मदीय - सीमित (तटस्थ)-सम्बन्धानाज्ञात्वैवातिसरलतया द्वारस्थास्ते गुरवः मास्प्रतीत्थङ्क्तास्तदा—"कृष्णकुमार, त्वदीयशिष्यः नाट्यप्रयोगे रतोऽथ त्वया तु तत्रावश्यमेव गन्तव्यम्—अहमत्रान्यकार्यव्यग्रोऽस्मि अन्यथा त्वया सह तत्राप्यचलिष्यम् । (घटिकां दृष्ट्वा) समयोऽतिवर्तते शीघ्रमेव गच्छ त्वं नाट्यप्रयोगं साक्षीकर्तुमि "त्युक्त्वा द्वारदेशादेव मां विसर्जयित्वा ते सत्वरं गृहाभ्यन्तरं प्रविष्टाः । लोकवृत्तैस्सन्तुष्टोऽप्यहमथ गुरोः सहज-निर्देशनेन निर्दिष्टः सन्यदा स्वशिष्यस्य नाट्यं सताटस्थ्यमपि द्रष्टुमारब्धवाँस्तदा एकैक-दृश्यानि पश्यन्बहुतरं सामाजिक-भावना-परितोषं प्राप्नोमि । अनन्तरञ्च स्वगृहमागतोऽहं गुरुवर्याणां सामयिक-सहज-प्रेरणया स्मयमान इव अनायासमेवैकस्माच्छैक्षिक-सांस्कृतिकापराधान्मुक्तमात्मानं मत्वा तुष्टः समभवमथ तु परमाचार्य-सिंहस्य सरलचित्ततायाः या मूर्तिर्मे मनस्यागताऽऽसीत्साऽद्यावधि तथैवाविचलं स्थानं धारयति यस्या भास्वरं स्वरूपं रक्षयिष्यते मयाऽऽजीवनमेव ।

अन्येऽप्यनेके प्रसङ्गास्सन्ति यथा मदीय एम० ए० कक्षायां पूर्णशुल्क-मुक्ति-घटनाऽथवा शास्त्रचर्चा-स्थले आचार्य-सिद्धेश्वरभट्टैः सहाद्वैत-विशिष्टाद्वैतप्रतिस्पर्धा - स्पर्धन - तेजस्विताऽथ च तत्तद् - विचित्र - घटना-मये संसारे तस्य सुदीर्घजीवनवृत्तं प्रेरणास्पदं दृष्टमस्माभिः । तथापि प्रदत्तेषु त्रिषु प्रसङ्गेषु आचार्यवर्यस्य जीवनस्य यः परिचयः लभ्यते तदाधारे वक्तुं पारयामो वयं यन्मम गुरवस्ते सिंहमहोदयास्तपोभिरधीत्याऽऽचरणेन च ब्राह्मणत्वं लब्ध्वा स्वशिष्यगणान् सज्ज्ञानज्योतिर्भिराप्याययन्तोऽपुनर्भवत्वं (ब्रह्मरूपत्वं) लब्धवन्तः ।

अयञ्चात्र सङ्ग्रहश्लोकः भवतु—

ज्ञात्वा धर्मं कर्मशीलः सुब्राह्मणतां लब्धवान् ।
यया गत्या नरः सत्यं ब्रह्मभूयाय कल्पते ॥

इति शं भूयात्सदैव ते ।

तस्मै श्रीगुरवे नमः ।

—०—

(स्व०) डॉ० सत्यव्रत सिंहः
लखनऊ

# अलङ्कारसर्वस्वविमर्शः

## अलङ्कारशास्त्रसाहित्ये राजानकरुय्यकप्रणीतस्याऽलङ्कार-सर्वस्वस्य महत्त्वम्

### अलङ्कारसर्वस्वमिति कः पदार्थः ?

राजानकरुय्यककृतमलङ्कारसर्वस्वं सर्वेष्वेवालङ्कारशास्त्रग्रन्थेषु स्ववैशिष्ट्यं विभावयति। अलङ्कारसर्वस्वमिति ग्रन्थनाम किमभिप्रेत्य राजानकरुय्यकेण कृतमिति जिज्ञासा स्वभावतः समुल्लसति। किं काव्यस्यालङ्कार एव सर्वस्वं जीवनाधायकतत्त्वं वा ? किमुत किञ्चनान्यत्तत्त्वं यदलङ्कारस्य सर्वस्वं तदात्मभूतं वेति समुदेत्येव जिज्ञासा। राजानकरुय्यकस्याभिप्रायं विमृशन् राजानकजयरथोऽलङ्कारसर्वस्वस्य व्याख्यायामलङ्कारविमर्षिणीसमाख्यायां यन्निर्णयति तदित्थम्—

'वाच्योपस्कारकत्वं ह्यलङ्काराणामात्मभूतम्।'

निर्णयोऽयं मङ्गलकामनया ग्रन्थकृता राजानकरुय्यकेण 'नमस्कृत्य परां वाच' मित्यादि वाग्वन्दनश्लोक एव निभृतं कृतः। अस्यैव निर्णयस्य विशदरूपेण विमर्शनं राजानकजयरथेन विमर्षिण्यां कृतम्- 'वाच्योपस्कारकत्वं ह्यलङ्काराणामात्मभूत' मिति ब्रुवता। अतो नालङ्काराः काव्यात्मभूता अपितु काव्यात्मभूतं--रसभावादिरूपं यदात्मतत्त्वं तस्य परम्परया वाच्योपस्कारक-

तया भवत्यलङ्काराणां काव्योपस्कारकत्वम् । तदिदं काव्योपस्कारकत्वमेव सर्वस्वमलङ्काराणाम् । अत एव नालङ्कारः काव्यस्य सर्वस्वभूत आत्मभूतो वेति ।

## ध्वनिदर्शनानुगुणाऽलङ्कारसर्वस्वरचना

यथा पश्यन्ती-मध्यमा-वैखरीरूपप्रकार-त्रयोत्तीर्णा सर्वत्र सदोदिता सूक्ष्मा शब्दब्रह्मणः शक्तिः परा वाक् तथा खल्वभिधातात्पर्यलक्षणारूपप्रकारत्रयोत्तीर्णा कविप्रजापतेः शक्तिः परा वाक् रसादिध्वनिरूपेति । रसादिध्वनिरूपैव वाक् शक्तिमतां कवीनां श्रोतॄणां च सहृदयानां स्वभावात् स्वेच्छया समुच्छलति; सैव शब्दं तत्संकीर्तितं चार्थमुपसर्जनीकृत्य विराजते; सैव द्योतनस्वाभाव्याद् ध्वनिरिति व्यपदेशविशेषमर्हति; सैव सर्वैः काव्यात्मभूतत्वादभिवन्द्यते; सैव सर्वत्र भारतीजातिपु प्रचरिता न क्वापि स्खलति; सैव श्रुतिमात्रेण हृदयाह्लादं समाविष्करोति; सैव कवेः कारयित्र्या प्रतिभया, सहृदयस्य च भावयित्र्या प्रतिभया कमपि लोकातिशायिनमहङ्कारं जनयति; सैव सर्वैरेव बुधैरभिलष्यते; तथा च तस्या एवाऽभिधातात्पर्यलक्षणारूपस्त्रिप्रकारो विग्रहो व्यतिरेकेण ग्रहः प्रमाकरणप्रकारोऽथवा शब्दार्थोभयमूलत्वात् त्रिविधो विग्रहो विशेषणानां भेदानां ग्रहो भवतीति सैव देवी 'दिवु क्रीडाविजिगीषाद्युतिस्तुतिव्यवहारमोदमदकान्तिस्वप्रगतिषु' इति यथायथं धात्वर्थानामनुस्मरणादिति ।

अलङ्काराणामलङ्कार्यापेक्षित्वमनवबुध्यऽचिरन्तना ऽ लङ्कारशास्त्रकारा भामहोद्भटप्रभृतयः प्रतीयमानमलङ्कार्यरूपमर्थतत्त्वमलङ्कार पक्षनिक्षिप्तं मेनिरे । एतत् खलु तेषामभिमतं न विचारचतुरस्रम् । कुत इति चेत् ? आदौ तावत्तेऽलङ्काराः परीक्षणीया येषु प्रतीयमानमर्थतत्त्वं वस्तुमात्रं प्रकाममवबुध्यते किन्तु तेन वाच्यमेवोपस्क्रियते तस्यैव कविविवक्षाविषयत्वात् तत्रैव च कवेः कर्तृत्वाभिनिवेशाच्चेति । तथा हि प्रथमं तावत् पर्यायोक्तालङ्कारो दृश्यताम् यत्र प्रतीयमानो व्यङ्ग्यरूपोऽर्थः पर्यन्ते वाच्यरूपमर्थमेव समुपस्करोति । प्रतीयमानमर्थं विना वाच्यरूपोऽर्थोऽनुपपन्नस्सन् प्रतीयमानमर्थं समाक्षिपतीति वा तात्पर्यम् । यदेव गम्यं तस्यैवाभिधानं पर्यायोक्तमिति । 'गम्यस्यापि भङ्ग्यन्तरेणाऽभिधानं पर्यायोक्त'मिति राजानकरुय्यककृतं पर्यायोक्तलक्षणं संगच्छतेतरामत्र । यद्दृष्टान्तभूतोऽद्याऽनुपलब्धप्राये हयग्रीववधमहाकाव्ये निम्नाङ्कितः श्लोको द्रष्टव्यः—

'स्पृष्टास्ता नन्दने शच्याः केशसंभोगलालिताः ।
सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः ॥,
इति ।

अत्र हयग्रीववधमहाकाव्यकर्ता हयग्रीवस्य स्वर्गविजयो कारणरूपो वर्णयितुमिष्टः किन्तु नात्र स्वर्गविजयो कारणमुखद्वारेणाभिधीयते, किन्तु कार्यमुखद्वारेण, कार्यस्यापि प्रस्तुतत्वाद् वर्णनार्हत्वादिति । कार्यकारणयोरविनाभावसम्बन्धत्वादत्राभिधीयमान यत्कार्यं हयग्रीवसैनिककृतपारिजातमञ्जरीस्पर्शनादि तत् स्वसिद्धये स्वर्गविजयरूपं कारणमाक्षिपतीति यत् प्रतीयमानं सदपि कारणं तत् वाच्यायमानमिव स्थितम् ।

यथा वा विमर्षिणीकारेण राजानकजयरथेन कुतश्चिद्राजप्रशस्तिकाव्याद्गृहीतः पर्यायोक्तदृष्टान्तो निम्ननिर्दिष्टः—

"अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमरद्
–विशल्यां सौमित्रेरयमुपनिनायौषधिवनात् ।
इति स्मारं स्मारं त्वदरिवलभीचित्रलिखितं
हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः, इति ।

अत्र शत्रुपलायनादिकारणरूपः प्रतीयमानोऽर्थः राक्षसगणवृत्तान्तेन वाच्येनार्थेन स्वसिद्धये समाक्षिप्यते शत्रुपलायनादिप्रतीयमानार्थमन्तरा वाच्यस्य राक्षसगणवृत्तान्तरूपस्यार्थस्यासङ्गतेः । कारणवर्णनापेक्षया कार्यवर्णनमतिशयेन सौन्दर्यावहमिति पर्यायोक्तं प्रयुञ्जन्ते कवयः ।

अप्रस्तुतप्रशंसाभिधेऽलङ्कारेऽपि अप्रस्तुतात् सामान्यविशेषभावे कार्यकारणभावे सारूप्ये च संबन्धे प्रस्तुतोऽर्थः प्रतीयमानरूपोऽवभासते । अवभासमानोऽपि प्रस्तुतः प्रतीयमानोऽर्थः वाच्यार्थेनाऽप्रस्तुतेन समशीर्षिकयैव सुन्दरस्सहृदयरञ्जकश्च संपद्यते नोद्रिक्ततयेति । तथाहि कविराजराजशेखरविरचितोऽलङ्कारसर्वस्वकृता समुद्धृतो बालरामायणस्याऽधोनिर्दिष्टः श्लोकोऽयं कार्यात् कारणप्रतीतावप्रस्तुतप्रशंसायां दृष्टान्तया द्रष्टव्यः—

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमरुचिः श्यामेव हेमप्रभा ।
कार्कश्यं कलयामि कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥ इति

अत्र सम्भाव्यमानैरिन्द्वादिगतैरञ्जनलिप्तत्वादिभिः कार्यरूपैरप्रस्तुतैर्लोकोत्तरो सीताया वदनादिगतः सौन्दर्यातिशयः कारणरूपः प्रस्तुतः प्रतीयतेऽर्थः । प्रतीयमानोऽयं प्रस्तुतोऽर्थः प्रकामं रमणीयः किन्तु वाच्यरूपोऽप्रस्तुतोऽप्यर्थः स्वसिद्धये प्रतीयमानार्थे स्वं समर्पयन्नपि न सुन्दर इति न ।

समासोक्तावप्यलङ्कारे प्रतीयमानार्थस्येदृश्येव गतिः । 'विशेषणानां साम्यादप्रस्तुतस्य गम्यत्वे समासोक्ति'रिति लक्षणं समासोक्तेरलङ्कारसर्वस्वकारलक्षितम् । उदाहरणं यथा—

'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम् ॥

इति ।

अत्र पुरातनप्रसिद्ध्या पाणिनिविरचिते श्लोके निशाशशिनोः श्लिष्टविशेषणमहिम्ना नायकव्यवहारप्रतिपत्तिः अपरित्यक्तस्वभावयोर्निशाशशिनोः नायकनायिकाख्यधर्मविशिष्टयोः प्रतीतिरिति भावः । इयं प्रतिपत्तिः प्रतीतिर्वा प्रतीयमानरूपैवानन्तप्रपञ्चरूपायां समासोक्तौ सहृदयानामनुभवविषयीभवति । किन्तु नेयमलङ्कार्यपदमाटीकते यतो हि प्रतीयमानेनार्थेन चमत्कृतः वाच्यार्थ एव निशाशशिव्यवहाररूपस्सुतरां परिपुष्टः स्वदते सहृदयेभ्यः ।

एवमेवाक्षेपव्याजस्तुत्युपमेयोपमानन्वयादावपि किञ्चिद् वस्तुमात्रं प्रतीयमानं गम्यमानं वा वरीवर्त्येव किन्तु तदन्ततो गत्वा वाच्यमेवोपस्कुरुते, यतो हि वाच्योपस्कारायैव पर्यायोक्तादिरूपा भङ्गीभणितिः कवीनां प्रथते । भामहोद्भटप्रभृतयः काव्यालङ्कारकाराः पर्यायोक्तादौ प्रतीयमानमर्थं वस्तुरूपमलङ्कारतयैव स्वीचक्रुरत एव 'काव्यस्यात्मा ध्वनिरिति बुधैः यः समाम्नातपूर्वः' तस्याऽभाववादिन एत इति युक्तियुक्तमुक्तं काव्यात्मतत्त्वदार्शनिकेनाऽचार्येणानन्दवर्धनेन, महामाहेश्वरेण चाचार्याभिनवगुप्तपादेन काव्यात्मतत्त्वदर्शनमहोपदेशकेनेति ।

रुद्रटेनाऽपि स्वकृते काव्यालङ्कारे गुणीभूतवस्तुविषयत्वेनागुणीभूतवस्तुविषयत्वेन च द्विप्रकारः प्रतीयमानो वस्तुरूपोऽर्थः वाच्योपस्कारकतयैव स्थित इति सिद्धान्तितः । वस्तुरूपप्रतीयमानार्थमतिशयानोऽलङ्काररूपप्रतीयमार्थोऽपि रुद्रटेन सूक्ष्मेक्षिकया दृष्टः यः खलु रूपकदीपकापह्नुतितुल्ययोगिताद्यलङ्कारप्रकारेषूपमालङ्काररूपेण विभासमानो वाच्योपस्कारकतां नातिवर्तते । यथाहि निम्नोदाहृते रूपकालङ्कारदृष्टान्ते—

'भीमभ्रूकुटिपन्नगीफणमणिः कामस्य चण्डं चिता-
-कुण्डं कुण्डलितेन्दुनालवलयप्रभ्रंशिरक्तोत्पलम् ।
घ्राणस्फाटिकमल्लिकापरिचिते भालाग्रशालाजिरे
दीप्रादीपशिखा शिवस्य नयनं कार्शानवं पातु नः ॥,
—इत्यादौ ।

अत्र नयनादीनां मणिप्रभृतीनाञ्चोपमा वाच्योपस्कारकर्त्रीति स्पष्टं प्रतीयते तां विना रूपकस्यैव रूपराहित्यादिति ।

एवमेव दीपकादावपि समानधर्मतायाः गम्यत्वं विना नालङ्कारतासिद्धिरिति प्रतीयमानाऽप्युपमाऽलङ्कारेष्वेषु वाच्योपस्कारायैव स्थितेति भाव। रुद्रटेनोत्प्रेक्षाया अपि प्रतीयमानार्थगर्भिताया वाच्योपस्कारकतैव प्रतिपादिता। इत्थं प्रतीयमानरूपोऽलङ्कारोऽपि स्वात्मन्यविश्रान्तः वाच्योपस्कारकतयैवावतिष्ठत इति रुद्रटाभिप्रायः।

रुद्रटेन रसवत्प्रेयःप्रभृतिषु यः रसभावादिः प्रतीयमानतया प्रतिभासते तस्यान्ततः वाच्यशोभावहत्वमेव सिद्धान्तितम् । निम्नोल्लिखिते रसवदलङ्कारोदाहरणे रुद्रटाभिमतं स्पष्टं परिलक्ष्यते—

'कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निस्पन्दतामागता ।
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकांक्षा मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥,

अत्र यद्यपि वत्सराजयस्योदयनस्य परस्परास्थाबन्धरूपो रत्याख्यः स्थायिभावो विभावानुभावव्यभिचारिसंयोगाद्रसीभूतस्तथापि स न स्वात्मविश्रान्तः किन्तु वाच्योपस्कारकतयैव स्थितः। रससंवलितस्य वाच्यस्यैवात्र चारुत्वातिशयः चमत्करोति सचेतसां चेतस्तस्यैव सचमत्कारं प्रतिपत्तेरिति भावः ।

इत्थमाऽऽभामहात् काव्यालङ्कारशास्त्रप्रवर्त्तकादाच रुद्रटात् काव्यालङ्कारशास्त्रप्रतिष्ठापनाचार्यात् सर्वेऽपि चिरन्तना अलङ्कारकाराः पर्यायोक्तादौ वस्तुरूपं रूपकादावलङ्काररूपं रसवत्प्रेयःप्रभृतिषु रसभावादिरूपं त्रिप्रकारमपि प्रतीयमानमर्थं वाच्योपस्कारकत्वादलङ्कारपक्षनिक्षिप्तमेव मन्यन्ते । कैश्चिदपि तैरलङ्कारोपस्कार्यः काव्यात्मा नाभ्युपगम्यत इति

प्राचामलङ्कारवादो नाम काव्यवादः। एतर्हि काव्यवादेऽलङ्कृतं कव्यशरीरमेव कविकर्मेति निश्चप्रचम्।

'रीतिरात्मा काव्यस्येति' रीत्यात्मकाव्यवादप्रवर्त्तको वामनाचार्यः काव्यशरीरात्काव्यात्मानं पृथग् विमृशन्नपि न ध्वनितत्त्वं वाच्य-तात्पर्य-लक्ष्यार्थातिशायि किञ्चिदनुभवरमणीयं काव्यार्थतत्त्वं मनुते। एवं प्राच्यानां मते वस्तुतोऽलङ्कार एव काव्यस्य सर्वस्वमिति। मतमिदं राजानकरुय्यक-स्यालङ्कारसर्वस्वकारस्य कृते पूर्वपक्षायितमेव। नेदं मतमनुरुन्धानो रुय्यका-चार्यः अलङ्कारसर्वस्वं रचयितुमुद्युक्तः किन्तु काव्यात्मभूतध्वनिवादमते न काव्यालङ्कारान् लक्षयितुमिति नवमलङ्कारशास्त्रसंविधानकमिवेदमलङ्कार-सर्वस्वमिति।

मम्मटाचार्यस्य काव्यप्रकाशोऽपि ध्वनिदर्शनमनुगत एव कश्चनाभिनवः काव्यालङ्कारशास्त्रग्रन्थः। किन्तु तत्र कोऽप्यलङ्कारसर्वस्वसदृशः भूमिकाबन्धो न दृश्यते यत्र चिरन्तनालङ्कारशास्त्रकाराणां काव्यदर्शनं पूर्वपक्षीकृत्य ध्वनि-दर्शनानुसारी काव्यालङ्कारवर्गः सिद्धान्तरूपेण साधितः। 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापी' ति काव्यलक्षणे मम्मटाचार्येण 'अनलङ्कृती पुनः क्वापी' ति ब्रुवता काव्येऽलङ्कार एव परं रहस्यमिति प्राचां मतमपुनरुत्थानं खण्डितमिति तु काचनान्यैव वार्ता।

ध्वन्यालोकं ध्वन्यालोकलोचनं च समनोभियोगं समनुसरता रुय्यका-चार्येण ध्वनिदर्शनसम्मतं काव्यस्वरूपं सम्यक् प्रकाशितम्। ध्वनिवाद एव सर्वकाव्यवादानतिशयानः सहृदयानुमोदितः सार्वभौमः काव्यवाद इति रुय्यका-चार्यस्य परिनिष्ठितः सिद्धान्तः। अत एव भट्टनायको व्यञ्जनाव्यापारं लक्ष-यितुमसमर्थः काव्यमभिधा–भावना–भोगीकृतिव्यापाररूपत्र्यंशं मन्वानो नादृतो राजानकरुय्यकेण। तत्र त्र्यंशे काव्ये शब्दार्थालङ्कृती खल्वभिधामतां याते, शृङ्गारादिगणो रसश्च भावनाव्यापारभाव्यः, भोगीकरणव्यापारश्च सहृदयगत इति त्रिभेदभिन्नालम्बनं व्यापारत्रयं भट्टनायकमते यत् स्वीकृतं तद् ध्वननात्मक एकस्मिन्नेव व्यापारेऽभ्युपगते विशृंखलमेव सिध्यतीति राजानक-रुय्यकस्य मतम्। अभिहितान्वयवादो भवतु, अन्विताभिधानवादो वा भवतु, उभयत्र ध्वननद्योतनप्रत्यायनावगमनादिपर्यायस्य व्यञ्जनाव्यापारस्यावश्या-भ्युपगम्यतैवान्ततः सिध्यति। व्यञ्जनाव्यापारस्य वाक्यार्थत्वाभावात् वाक्यार्थस्यैव च व्यङ्ग्यरूपस्य गुणालङ्कारोपस्कर्त्तव्यत्वेन प्राधान्याद्विश्रान्ति-

धामत्वादात्मत्वं साधुसिद्धान्तितमाचार्येणानन्दवर्धनेनाभिनवगुप्तपादाचार्येण चेति। यथा ह्योदनादेर्विक्लित्त्यादिमुखेन पचिक्रियायाः स्वरूपोपलम्भस्तथैव व्यञ्जनाख्यस्य व्यापारस्य स्वरूपेण विदितत्वाभावात् विषयमुखेनैव च स्वरूपप्रतिलम्भाद् विषयप्राधान्यत एव प्राधान्यम्। विषय एव व्यङ्ग्यार्थरूपः रसभावादिः समग्रमरसहिष्णुरिति स एव काव्यस्य जीवितमात्मतत्त्वं वेति स्वीकार्यमेव काव्यतत्त्वेक्षणविचक्षणैः। व्यङ्ग्यनामा रसाद्यात्मा विषय एव धर्मी यस्य 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः। उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः' इत्यादिनीत्या गुणाः धर्मरूपा अनुभवविषयीक्रियन्ते। रसाद्यात्मन एव व्यङ्ग्यरूपविषयस्य कृते 'उपकुर्वन्ति तं सन्तं तेऽङ्गद्वारेण जातुचित्। हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः' इत्यादिनयेनानुप्रासोपमादयोऽलङ्काराः शब्दार्थलक्षणाङ्गसौन्दर्यवर्धका एवाभिमताः। अथ चालङ्कार्यसद्भावनिबन्धनः रसभावाद्यात्मा व्यङ्ग्यार्थ एवालङ्कार्यरूपेण प्रतिष्ठितः। अलङ्कारा खलु रसादिरूपं व्यङ्ग्यमर्थमलङ्कुर्वन्त एवालङ्कारा भवन्ति नातोऽन्यथा। अत एव यत्र व्यङ्ग्यार्थो न स्फुटस्तत्र तेषां 'गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता' इत्यादिनीत्या शब्दार्थमात्रनिबन्धनतयोक्तिवैचित्र्यमात्रपर्यवसितत्वाद् यदलङ्कारत्वं तद् गौणमेव न मुख्यम्। अत एव ध्वनिदर्शनप्रतिष्ठापकेनैतादृशामलङ्काराणां चित्राख्यकाव्यभेदत्वं सिद्धान्तितम्। वस्त्वलङ्काररूपयोः प्रतीयमानार्थयोः यथाकथञ्चिदलङ्कारपक्षनिक्षिप्तत्वेऽपि काव्यात्मनो रसभावादेरलङ्कारत्वमत्यन्तमेवावाच्यम्, अलङ्कार्यस्यालङ्कारत्वानुपपत्तेः। अत एव ध्वनिदर्शनकृता यत् कारिकायां निम्नोद्धृतायां सिद्धान्तितम्—

'व्यङ्ग्यव्यञ्जकसंबन्धनिबन्धनतया ध्वनेः।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः॥'

तत् सर्वथा विचारितरमणीयं सर्वैः काव्यलक्षणकारैरभ्युपगमनीयमेव।

इत्थं ध्वन्यात्मवाददृशा द्वौ काव्यभेदौ व्यङ्ग्यस्य प्राधान्याप्राधान्याभ्यां ध्वनिगुणीभूतव्यङ्ग्याख्यौ। व्यङ्ग्यस्यास्फुटत्वेऽलङ्कारवत्त्वेन तृतीयः काव्यभेदश्चित्राख्य इति।

राजानकरुय्यकेणैव शब्दार्थोभयालङ्कारस्वभावतया बहुतरप्रभेदं चित्रकाव्यं निरूपयितुमलङ्कारसर्वस्वप्रारम्भे महता संरम्भेण पूर्वनिर्दिष्टो भूमिकाबन्ध इदंप्रथमतया कृतः। अस्त्येतद् वैशिष्ट्यमलङ्कारसर्वस्वस्य यदन्यत्रा-

दृष्टचरमेव प्रतिभाति । वस्तुतो ध्वनिकृता चित्रकाव्यं नीरसमिति मत्वा तस्य भेदप्रभेदादि यन्नोक्तं तद्राजानकरुय्यकेणालङ्कारसर्वस्वे विशदं निरूपितम्। अलङ्काराणां सर्वस्वं काव्योपस्कारकत्वमेवेति दृष्टान्तयितुं कृतो राजानक-रुय्यकस्यायमध्यसायः साधिष्ठ इति मन्तव्य एव सुधीभिः ।

## अलङ्कारसर्वस्वकृतः शब्दालङ्कारविवेके पौनरुक्त्यस्य सामान्यस्य शब्दालङ्कारेष्वनुवर्तमानत्वम्

शब्दालङ्कारेषु सर्वत्र विवर्तमानं यत्सामान्यं पौनरुक्त्यं नाम स्वर-व्यञ्जनसमुदायस्य तद्द्वारीकृत्यालङ्कारसर्वस्वकृता पञ्चप्रकाराः शब्दा-लङ्काराः सदृष्टान्तं लक्षिताः । अन्येषु काव्यालङ्कारशास्त्रग्रन्थेषु नायं पौन-रुक्त्यरूपस्सामान्यात्मा शब्दालङ्कारस्वभावो निरूपितो दृश्यते । अत एवा-लङ्कारसर्वस्वकृता शब्दालङ्कारान् लक्षयितुकामेनारम्भ एव सिद्धान्तितम्—

'इहार्थपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति त्रयः पौनरुक्त्यप्रकाराः' इति ।

अत्र शब्दपौनरुक्त्यादौ ग्रहणमकृत्वा यदर्थपौनरुक्त्यं प्रस्तावितं तत्र चिरन्तनालङ्कारकारमतानुलङ्घनमेव कारणम् । चिरन्तनेष्वलङ्कारकारेषु 'पुन-रुक्तवदाभासं छेकानुप्रास एव चे' त्यस्ति प्रसिद्धिः । तामनादृत्य राजानक-रुय्यकः प्रथमं पुनरुक्तवदाभासमेव लक्षयामास । अलङ्कारशब्दः पुलिङ्गः; पुनरुक्तवदाभासमित्यत्र च नापुंसकः संस्कार इति किञ्चिदसङ्गतमिव न भासेतेति कृत्वा काव्यालङ्काराणामलङ्कार्येण सह समवायसंबन्धत्वादलङ्कार्य-पारतन्त्र्यमेवेति लौकिकालङ्कारवैधर्म्यं प्रदर्शयितुं पुनरुक्तवदाभासमिति नापुंसकः संस्कार औचित्यावह इति रुय्यकाभिप्रायः ।

तत्रादावापातवत् पर्यवसानेऽप्यैकार्थ्यप्रतीतिर्दोषावहेति निश्चित्य 'आमुखावभासनं पुनरुक्तवदाभासम्' इति **पुनरुक्तवदाभासनामाऽलङ्कारो** लक्ष्यते । पौनरुक्त्यस्य प्ररूढत्वं यथावसानविश्रान्तत्वं वा दोषावहं भवति । एतस्योदाहरणं निम्नाङ्कितमेव पद्यम्—

'हरिणनयनां सारङ्गाक्षीं कुरङ्गविलोचनाम्
कमलवदनां राजीवास्यां सरोजसमाननाम् ।
विलुलितकचां चञ्चत्केशीं चलच्चिकुरोत्करां
सुरतविरतौ संभोगान्ते विलोक्य कामिनीम् ॥' इति ।

अत्र सारङ्गाक्षीमित्यादिषु पुनर्वचनं प्ररूढं यथावभासनविश्रान्तं वा दोषायैवेति नाम पुनरुक्तवदाभासम् ।

पुनरुक्तवदाभासालङ्कारः शब्दस्यापौनरुक्तयान्न शब्दालङ्कारो नवोभयालङ्कारः, किन्त्वर्थपौनरुक्त्यादर्थाश्रितत्वादर्थालङ्काररूपः । आमुखावगतैव प्रतीतिः पुनरुक्तवदाभासालङ्कारबीजं न पार्यन्तिकी । श्रीकण्ठचरिते निम्नाङ्कितश्लोकत्रये सुबन्तापेक्षया पुनरुक्तवदाभासस्य शोभा समुल्लसति—

'अहीनभुजगाधीशवपुर्वलयकङ्कणम् ।
शैलादिनन्दिचरितं क्षतकन्दर्पदर्पकम् ॥
वृषपुङ्गवलक्ष्माणं शिखिपावकलोचनम् ।
ससर्वमङ्गलं नौमि पार्वतीसखमीश्वरम् ॥
दारुणः काष्ठतो जातः भस्मभूतिकरः परः ।
रक्तशोणार्चिरुच्चण्डः पातु वः पावकः शिखी ॥'

श्रीकण्ठचरितमहाकाव्य एव तिङन्तापेक्षया पुनरुक्तवदाभासालङ्कारो यथा—

'भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः ।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः ॥ इत्यत्र ।

अलङ्कारस्यास्य सार्थकानर्थक—सभङ्गाभङ्ग-शब्दनिष्ठत्वादिभिः प्रभेदभूयस्त्वं भवति । अलङ्कारोऽयं संस्कृतवाचि प्रविरलविषय एव । अन्यासु भाषासु पुनरुक्तवदाभासत्वं न दृष्टचरम् । इत्थमयं काव्यालङ्कार ऐतिहासिकं महत्त्वं बिभ्रतु प्रकामं किन्तु वास्तविकं महत्त्वमस्य संदेहावहमेवेति कृत्वा शब्दालङ्कारप्रस्तावेऽस्याऽनिवार्यमान्यता न युक्तिमती । तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति, इतिन्यायो नात्रानुसर्त्तव्यः ।

शब्दपौनरुक्त्यं व्यञ्जनमात्रपौनरुक्त्यं स्वरव्यञ्जनसमुदायपौनरुक्त्यं चेति द्विभेदभिन्नम् । संस्कृतकवयः स्वरपौनरुक्तय नालङ्काररूप मन्वते । अत एव संस्कृतकाव्यालङ्कारशास्त्रकारा अपि स्वरपौनरुक्त्यस्याचारुत्वात् शब्दालङ्कारप्रस्तावादस्य स्वरपौनरुक्त्यस्य बहिष्कारं कृतवन्तः । अत एवालङ्कारसर्वस्वस्य विमर्षिण्यां राजानकजयरथेन निम्नाङ्कितं प्राकृतपद्यं स्वरपौनरुक्तयप्रदर्शनाय समुदाहृत्य तत्र चारुत्वाभावान्नालङ्कारत्वमिति निर्णीतम्—

'इंदीवरम्मि इंदम्मि इंदआलम्मि इंदिअगणम्मि ।
इंदिंदिरम्मि ईदमि जोइण्णो सरिससंकप्पो ।।' इति ।

व्यञ्जनमात्रपौनरुक्त्ये द्वयोर्व्यञ्जनसमुदाययोः परस्परमनेकधा सादृश्येऽनुप्रासभेदश्छेकानुप्रासनामाऽलङ्कारश्चिरन्तनसंप्रदायमनुरुन्धानेन राजानकरुय्यकेणैवं लक्षितः—

'संख्यानियमे पूर्वं छेकानुप्रास' इति ।

द्वयोर्व्यञ्जनसमुदाययोः परस्परमनेकधा सादृश्यं संख्यानियम इति कथ्यते । अत्र वर्णसाम्यं निरर्थकं भवितुमर्हति सार्थकं च । तदुदाहरणं यथा—

'किं नाम दर्दुर दुरध्यवसाय सायं
कायं निपीड्य निनदं कुरुषे रुषैव ।
एतानि केलिरसितानि सितच्छदाना-
माकर्ण्य कर्णमधुराणि न लाञ्छितोऽसि' ।। इत्यत्र ।

छेका इति विदग्धा उच्यन्ते । अयममि छेकानुप्रासः संस्कृतकाव्यालङ्कारभाण्डागारे क्वचित्कोणे सुरक्षितं निक्षेप्तुमर्हः । वृत्यनुप्रासेनाऽस्यैकाभिधानलक्षणः संकरः प्रायः सर्वत्र दृष्टचर इति वृत्त्यनुप्रासस्यैव शब्दोपस्कारसमग्रभरसहिष्णुत्वं मन्तव्यमिति ।

संख्यानियमे सति छेकानुप्रासोऽन्यथाऽर्थात् संख्यानियमाभावे तु वृत्त्यनुप्रास इति सुष्ठु लक्षितो राजानकरुय्यकेण 'अन्यथा तु वृत्त्यनुप्रास' इति सूत्रमासूत्रयता । अत्र वृत्त्यनुप्रासे वृत्तिशब्दः रसविषयकव्यापारवाचकः । अतो रसविषयवती वर्णरचना वृत्तिरिति । सा च परुष-कोमल-मध्यमवर्णारब्धत्वात् त्रिधा भवति । तदुपलक्षितोऽनुप्रासो वृत्त्यनुप्रास इति । तदुदाहरणं यथा—

'आटोपेन पटीयसा यदपि सा वाणी कवेरामुखे
खेलन्ती प्रथते तथापि कुरुते नो मन्मनोरञ्जनम् ।
न स्याद्यावदमन्दसुन्दरगुणालङ्कारझंकारितः
सप्रस्यन्दिलसद्रसायनरसासारानुसारी रसः ।। इति ।

न केवलं संस्कृतभाषानिबद्धकाव्येष्वपि तु ग्रीकलैटिनफ्रेंचाङ्गलादिभाषान्तरनिबद्धेष्वपि काव्येषु वृत्त्यनुप्रासस्य रसभावावहत्वं काव्यशोभा-

वहुत्वञ्च दृष्टचरमिति वृत्त्यनुप्रासस्य नैतिहासिकं महत्त्वं किन्तु वास्तविकं सार्वभौमं सार्वकालिकञ्च महत्त्वं स्वीकरणीयमेव ।

वस्तुतः सर्वमेतद् विचिन्त्यैव वक्रोक्तिजीवितकारः कुन्तकाचार्यः कवि-व्यापारवक्रत्वप्रकारेषु वर्णविन्यासवक्रत्वं साहित्यशोभाशालित्वेन सर्वप्रथमं परिगणयति । 'एतदेव वर्णविन्यासवक्रत्वं चिरन्तनेष्वनुप्रास इति प्रसिद्ध' मिति च संगिरति । वर्णविन्यासवक्रत्वस्य विशेषलक्षणञ्च स एवाचार्य एवमुपक्रमते (वक्रोक्तिजीविते द्वितीय-विन्यासे प्रथमकारिकायाम्)—

'एको द्वौ बहवो वर्णा वध्यमाना पुनः पुनः ।
स्वल्पान्तरास्त्रिधा सोक्ता वर्णविन्यासवक्रता ।। इति ।

तत्रैकव्यञ्जननिबन्धनवक्रत्वं यथा—

'धम्मिल्लो विनिवेशितात्पकुसुमः सौन्दर्यधुर्यं स्मितं
विन्यासो वचसां विदग्धमधुरः कण्ठे कलः पञ्चमः ।
लीलामन्थरतारके च नयने यातं विलासालसं
कोऽप्येवं हरिणीदृशः स्मरशरापातावदातः क्रमः ।। इति ।

एवमेकस्य द्वयोर्बहूनां चोदाहरणं यथा—

भग्नैलावल्लरीकास्तरलितकदलीस्तम्बताम्बूलजम्बू—
जम्बीरास्तालीसरलतरलतालासिका यस्य जह्रुः ।
वेल्लत्कल्लोलहेलाविसकलनजडा, कूलकच्छेषु सिन्धोः
सेनासीमन्तिनीनामनवरतरताभ्यासतान्ति समीराः ।। इति ।

एतामेव वर्णविन्यासविच्छित्तिं वर्णवक्रतां वा काव्यौपयिकीं निर्देष्टुं स एव निम्नलिखितं नियमबन्धमपि निर्माति (वक्रोक्तिजीविते द्वितीयविन्यासे चतुर्थकारिकायाम्)—

'नातिनिर्बन्धविहिता नाप्यपेशलभूषिता ।
पूर्वावृत्तपरित्यागनूतनावर्तनोज्ज्वला ।। इति ।

कीदृशी वर्णविन्यासवक्रतेति—'नातिनिर्बन्धविहिता', निर्बन्धशब्दोऽत्र व्यसनितायां वर्तते । तेनानिनिर्बन्धेन पुनः पुनरावर्तनव्यसनितया न विहिता, अप्रयत्नविरचितेत्यर्थः । व्यसनितया प्रयत्नविरचने हि प्रस्तुतौचित्यपरिहाणे-र्वाच्यवाचकयोः परस्परस्पर्द्धित्वलक्षणसाहित्यविरहः पर्यवस्यति । यथा—

'भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।
यदि सल्लीलोल्लापिनि गच्छसि तत् किं त्वदीयं मे ।
अननुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते' । इत्यत्र ।

अत्र हि प्रतिभादारिद्र्यदैन्यादतिस्वल्पसुभाषितेन कविना वर्णसावर्ण्यमात्रमुदितम्, न पुनर्वाच्यवैचित्र्यकणिका काचिदस्तीति ।

'नाप्यपेशलभूषितेति— न चाप्यपेशलैरसुकुमारैरक्षरैरलङ्कृता । यथा—

'शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते—
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ।' इति ।

तदेवं कीदृशी तर्हि कर्तव्येत्याह—पूर्वावृत्तपरित्यागनूतनावर्तनोज्ज्वला । पूर्वमावृत्तानां पुनः पुनर्विरचितानां परित्यागेन प्रहाणेन नूतनानामभिनवानां वर्णानामावर्तनेन पुनः पुनः परिग्रहेण च तदेवमुभाभ्यां प्रकाराभ्यामुज्ज्वला भ्राजिष्णुः । यथा—

'एतां पश्य पुरस्तटीमिह किल क्रीडाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूडान्तरे ताडितः ।
इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रापते—
र्मन्दं मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डनम् ।। इति ।

वक्रोक्तिजीवितकारसम्मतं वर्णविन्यासवैचित्र्यमिदंरूपं राजानकरुय्यकस्यापि सुतरामभिमतमिति तस्य वृत्त्यनुप्रासविषयकविवेचनेन प्रस्पष्टमेव प्रतिभाति ।

स्वरव्यञ्जनसमुदायपौनरुक्त्यं 'यमक' मिति **यमकालङ्कारोऽपि** शब्दालङ्कारतयेष्यते काव्यलक्षणविधायिभिराचार्यैः । स्वरव्यञ्जनसमुदायपौनरुक्त्ये क्वचिद् भिन्नार्थत्वम्, क्वचिदभिन्नार्थत्वम्, क्वचिदेकस्यानर्थकत्वमपरस्य सार्थकत्वमिति संक्षेपतः प्रकारत्रयं भवति । तत्र सार्थकत्वे यमकस्योदाहरणं यथा—

'यो यः पश्यति तन्नेत्रे रुचिरे वनजायते ।
तस्य तस्यान्यनेत्रेषु रुचिरेव न जायते ।। इति ।

अयमप्यलङ्कारः संस्कृतभाषानिबद्धेषु काव्येष्वेव दरीदृश्यते।

ध्वनिदर्शनकृताऽऽनन्दवर्धनाचार्येण रसप्रबन्धेषु यमकालङ्कारनिबन्धनमुद्दिश्य यदुक्तं निम्नांङ्कितायां कारिकायाम् (ध्वन्यालोक २.१५)—

'ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम्।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः॥'

'ध्वनेरात्मभूतः शृङ्गारस्तात्पर्येण वाच्यवाचकाभ्यां प्रकाश्यमानस्तस्मिन् यमकादीनां यमकप्रकाराणां निबन्धनं दुष्करशब्दभङ्गश्लेषादीनां शक्तावपि प्रमादित्वम्। प्रमादित्वमित्यनेनैतद् दर्श्यते काकतालीयेन कदाचित् कस्यचिदेकस्य यमकादेर्निष्पत्तावपि भूम्नाऽलङ्कारान्तरवद्रसाङ्गत्वेन निबन्धो न कर्तव्य इति। विप्रलम्भे विशेषत इत्यनेन विप्रलम्भे सौकुमार्यातिशयः ख्याप्यते। तस्मिन् द्योत्ये यमकादेरङ्गस्य निबन्धो नियमान्न कर्तव्य इति।'

तद्राजानकरुय्यकस्यापि सम्मतं स्पष्टतो शब्दतः उल्लेखाभावेऽपि।

न केवलं यमकालङ्कारस्याऽपितु सर्वेषामलङ्काराणां बन्धविषये सर्वव्यापकः सिद्धान्त एवं प्रतिपादितो ध्वन्यालोककृता (ध्वन्यालोक २.१६)—

'रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः॥'

'निष्पत्तावाश्चर्यभूतोऽपि यस्यालङ्कारस्य रसाक्षिप्ततयैव बन्धः शक्यक्रियो भवेत् सोऽस्मिन्नलक्ष्यक्रमव्यङ्ग्ये ध्वनावलंकारो मतः।'

ध्वनिप्रस्थानानुसारं काव्योपस्कारसर्वस्वस्य सर्वस्याप्यलङ्कारजातस्य निबन्धने रुय्यकाचार्योऽपि ध्वनिकारमतमिदं सर्वात्मना स्वीकरोति।

वक्रोक्तिजीवितकारः कुन्तकाचार्यो यमकालङ्कारं वर्णविन्यासवक्रतारूपं मन्वानस्तत्प्रयोगं काव्येऽशोभावहमिति निगमयन्नाह—

'समानवर्णमन्यार्थं प्रसादि श्रुतिपेशलम्।
औचित्ययुक्तमाद्यादिनियतस्थानशोभि यत्॥
यमकं नाम सोऽप्यस्याः प्रकारः परिदृश्यते।
स तु शोभान्तराभावादिह नाति प्रतन्यते।'

'कोऽप्यस्याः (वर्णविन्यासासवक्रतायाः) प्रकारः परिदृश्यते। कोऽसा-

वित्याह-यमकं नाम । यमकमिति यस्य प्रसिद्धिः । तच्च कीदृशम् ?—समानवर्णम् समानाः सरूपाः सदृशश्रुतयो वर्णा यस्मिन् तत्तथोक्तम् । एवमेकस्य द्वयोर्बहूनां सदृशश्रुतीनां व्यवहितमव्यवहितं वा यदुपनिबन्धनं तदेव यमकमित्युच्यते । तदेवमेकरूपे संस्थानद्वये सत्यपि अन्यार्थं भिन्नाभिधेयम् । अन्यच्च कीदृशम् प्रसादि प्रसादगुणयुक्तं झगिति वाक्यसमर्पकम् । अकदर्थनाबोध्यमिति यावत् । अतिपेशलमित्येतदेव विशिष्यते । श्रुतिः श्रवणेन्द्रियं तत्र पेशलं रञ्जकम्, अकठोरशब्दविरचितम् । कीदृशम्—औचित्ययुक्तम् । औचित्यं वस्तुनः स्वभावोत्कर्षस्तेन युक्तं समन्वितम् । यत्र यमकोपनिबन्धनव्यसनित्वेनाप्यौचित्यमपरिम्लानमित्यर्थः । तदेव विशेषणान्तरेण विशिनष्टि—आद्यादि–नियतस्थानशोभि यत् । आदिरादिर्येषां ते तथोक्ताः प्रथममध्यान्तास्तान्येव नियतानि स्थानानि विशिष्टाः सन्निवेशास्तैः शोभते भ्राजते यत्तथोक्तम् ।...... ...........स तु प्रकारः प्रोक्तलक्षणसम्पदुपेतोऽपि भवन् इह नातिप्रतन्यते ग्रन्थेऽस्मिन्नाति विस्तार्यते । कुतः शोभान्तराभावात् । स्थाननियमव्यतिरिक्तस्यान्यस्य शोभान्तरस्य छायान्तरस्याऽसंभवादित्यर्थः । अस्य च वर्णविन्यासवैचित्र्यव्यतिरेकेणान्यत् किञ्चिदपि जीवितान्तरं न परिदृश्यते ।

राजानकरुय्यकस्याप्येतद्विषये न वैमत्यमिति तत्कृतेनातिसंक्षिप्तेन यमकालङ्कारनिरूपणेन स्पष्टम् ।

शब्दार्थपौनरुक्त्यस्य प्ररूढत्वे यथावभासनविश्रान्तत्वे वा दोषापातात्, तात्पर्यभेदे सति दोषराहित्यात् **लाटानुप्रासो** नाम शब्दालङ्कारश्चिरन्तनालङ्कारकारप्रसिद्ध्या राजानकरुय्यकेणापि लक्षितः 'तात्पर्यभेदवत्तु लाटानुप्रास' इति सूत्रमारचयता । लाटानुप्रासस्तत्र भवति यत्र शब्दार्थयोः स्वरूपाभेदे सत्यपि तात्पर्यं भिद्यते । यथा प्राकृतगाथायां निम्नाङ्कितायाम्—

'ताला जाअंतिगुणा जाला दे सहिअएहिं घेप्पन्ति ।
रइकिरणाणुगाहिआइं होंति कमलाइं कमलाइं ॥'

अत्र एकः कमलशब्दः वाच्यपर्यवसितः अन्यश्च सौरभबन्धुरत्वाद्यनेकधर्मनिष्ठ इति तात्पर्यभेदः । अनुप्रासोऽयं लाट—विषयवर्तिकविजनप्रियत्वाल्लाटानुप्रास इति संज्ञां लभते । इत्थमस्य नाम्नैवास्यैकदेशित्वं सामयिकत्वं च सिध्यति । अतो नास्य लाटानुप्रासस्य सार्वदेशिकत्वं सर्ववाङ्मयव्यापित्वं सार्वकालिकत्वञ्च स्वीकर्तुमलम् । अनुप्रासेनानेन रसप्रबन्धेषु काव्य-

प्रबन्धेषु न काचनातिशयरमणीयता समुल्लसन्ती दृष्टिपथमायाति ।

इत्थमर्थपौनरुक्त्याश्रितं पुनरुक्तवदाभासमेकम् शब्दपौनरुक्त्याश्रिताः छेकानुप्रासवृत्त्यनुप्रासयमकालङ्कारास्त्रयः, शब्दार्थपौनरुक्त्याश्रितश्च लाटानुप्रास एक इति सर्वसंकलनया पौनरुक्त्ये पञ्चालङ्काराः शब्दालङ्कारसंज्ञां लभन्ते । पञ्चस्वेतेषु वृत्त्यनुप्रास एवैको वस्तुतः सर्ववाङ्मयव्यापी सार्वभौमः सर्वसहृदयहृदयरञ्जकः समग्रवर्णसावर्ण्यभरसहिष्णुश्च शब्दालङ्कार इति निर्विवादम् ।

पौनरुक्त्यस्य षष्ठोऽपि प्रकारः स्थानविशेषश्लिष्टवर्णपौनरुक्त्यात्मकः चिरन्तनालङ्कारकारैः प्रतिपादितो यस्य **चित्रमिति** विचित्रमेव रूपानुसारि नाम प्राप्तप्रथम् । चित्रालङ्कारस्य शब्दालङ्कारत्वमौपचारिकम् । लिप्यक्षराणां मषीबिन्दुरूपाणां श्रूयमाणतासतत्त्ववर्णशब्दाभेद प्रतिपत्तेः । प्राचीनासु तत्तच्छब्दार्थच्छन्दोबन्धादिनैपुण्यप्रदर्शनपराणां कवीनां गोष्ठीषु चित्रालङ्काराः एकद्वित्र्यक्षरबन्ध--पद्मखड्गगोमूत्रिकासर्वतोभद्रादिबन्धविशेषाः जनिं लेभिर इत्यनुमातुं शक्यते । प्राचीनामिमां परम्परां परिरक्षद्भिः प्राचीनैः काव्यालङ्कारकारैरेतेषामपि बन्धानां शब्दालङ्कारत्वं प्रतिपन्नं प्रतिपादितञ्चेति नातितिरोहितम् । ध्वनिदर्शनकारैरानन्दवर्धनाचार्यैरेतेषां रसभावाभिव्यञ्जनानुपयोगित्वं चिन्तयित्वा सुकविकाव्येषु प्रयोगः प्रतिषिद्धः । तैश्चित्रं तु नीरसमिति घण्टाघोषेण क्रियमाणेऽपि चित्रविधाननिषेधे चित्रबन्धपरम्परां प्रदर्शयितुकामैरालङ्कारिकैश्चित्रस्य शब्दालङ्कारत्वं स्व-स्वग्रन्थेषु प्रतिपादितम् । इमामेव पुरातनीं कविपरम्परां प्रकाशयितुं राजानकरुय्यकेणापि चित्रालङ्कारोऽयं स्थानविशेषश्लिष्टवर्णपौनरुक्त्यात्मको लक्षितोऽलङ्कारसर्वस्वे । किन्तु 'रसविषयो व्यापारो वृत्तिः । तद्वतीं पुनर्वर्णरचनेह वृत्तिः । सा च परुष-कोमलमध्यमवर्णारब्धत्वात् त्रिधा । तदुपलक्षितोऽयमनुप्रासः' इत्यादिप्रतिपादनपुरस्सरं यद्वृत्त्यनुप्रासो निरूप्यते राजानकरुय्यकेण ततः वृत्त्यनुप्रासस्यैव शब्दालङ्कारेषु वस्तुतः समग्रशब्दसौष्ठवभरसामर्थ्यं स्थूणानिखननन्यायेन समर्थितं भवतीति ।

—०—

डॉ० अशोक कुमार कालिया
लखनऊ

# श्रीसत्यव्रततीर्थाऽवगाहनम्

पक्षं सपक्षयन्तं
सद्वृक्षं विपक्षयन्तं विपक्षम् ।
सत्यव्रतहर्यक्षं
तं प्रत्यक्षयाम्यपरोक्षम् ॥

सत्यम्, अपरोक्षमिव नरीनृत्यन्ति तानि क्षणानि मम जीवनस्य यान्यहं डॉक्टरसत्यव्रतसिंहसान्निध्यतीर्थविगाहनात् पूतपूतानि मन्ये । १९५९ तमे वर्षे लक्ष्मणपुरविश्वविद्यालये स्नातककक्षायां प्रवेशं प्राप्तवानहम् । तस्मिन्नेव वर्षे तेषां महानुभावानां प्रथमदर्शनं सञ्जातम् । आरम्भत एव विभागीयेषु कार्यक्रमेषु पूर्णतया सक्रियोऽहमासम् । संस्कृतविभागीयसंस्थायाः ज्ञानवर्द्धिन्याः सभायाः १९६२ तमे वर्षे मन्त्रिरूपेण १९६३ तमे वर्षे च अध्यक्षरूपेण महत्त्वपूर्णकार्यक्रमाननेकप्रकारकान् समायोजितवानहम् । एते ते विशिष्टावसरा आसन् यदाऽहं तत्सान्निध्यसुखमसकृदनुभूतवान् । संस्कृतनाटकानामायोजनमेतेषु कार्यक्रमेषु कश्चनासीदतिविशिष्टः कार्यक्रमः । एतादृशेष्वतिविशिष्टकार्यक्रमेषु मम सक्रिया सहभागिताऽऽसीदेकं तत्प्रीतिपात्रताकारणम् । एतानि दृश्यानि प्राय आविर्भवन्तीव मम हृदयचित्रपटे नातिविशदतया । नातिविशदतयाऽवभासने कालिकदूरतैव कारणम् । एतादृशं गुरुजनसान्निध्यञ्च प्रायोऽनुभवन्त्येव विद्यार्थिनः । मया लब्धं तत्सान्निध्यं न किमपि वैशिष्ट्यमावहति । किन्तु यदहमग्रे वक्तुमिच्छामि तेनैतन्नितरां सेत्स्यति यदहं तद्विशिष्टनिर्हैतुकाऽनुग्रहपात्रमासम् इति ।

विलक्षणैवाऽऽसीन् मम पारिवारिकी परिस्थितिः। तदानीं संयुक्त आसीदस्मदीयः परिवारः। कृषिकार्यं परिवहनव्यापारश्च परिवारस्याऽर्थस्रोतसी आस्ताम्। आर्थिकदृष्ट्या परिवारोऽयं मध्यमवर्गीय आसीत्, नाऽसमृद्धो न वाऽतिसमृद्धः। षट्स्वपि भ्रातृषु मम पिता ज्येष्ठ आसीत्। ज्येष्ठोऽप्यसावार्थिकविषयेषु सर्वथोपेक्षित आसीत्। एतस्यां परिस्थितौ शिक्षादिकमप्यस्मदीयं तदधीनं नाऽऽसीत्। आरम्भादेव सर्वोऽपि परिवारजनोऽस्मच्छिक्षाया विरुद्ध आसीत्। बहुधाऽनुत्साहितोऽपि सर्वथा विपरीतपरिस्थितावपि एम्० ए० परीक्षामहं यथाकथञ्चित् समुत्तीर्णवान्। व्ययसाध्यशिक्षाग्रहणादिकार्यं यथाशीघ्रं परित्यज्य धनागमसाधनेषु मम प्रवृत्तिर् आसीदिष्टा परिवारजनानाम्। एवम् एम्० ए० परीक्षोत्तरणानन्तरं विद्याप्राप्तेः सर्वानपि मार्गानवरुद्धान् सर्वाणि च द्वाराणि मुद्रितकपाटान्येवाऽहमपश्यम्। सहसैव प्रकाशस्य काचन रेखा लोचनगोचरतां गता। एता एव ताः परिस्थितयो या लोकोत्तरसत्तायां विश्वासं समुत्पादयन्ति। अहं तु संस्कारवशादेव तद्विश्वासपक्षपाती। सर्वत एव शोधादिरूपशिक्षाग्रहणकर्मणि निराशस्य मम शान्ते मनसि कश्चन विचारः समुत्पन्नः। विशिष्टाद्वैतदर्शनम् आसीन् मम विशिष्टोऽध्ययनविषय एम्० ए० कक्षायाम्। एम्० ए० परीक्षां समुत्तीर्यापि, सम्यगधीत्यापि विशिष्टाद्वैतदर्शनं मम विशिष्टाध्ययनविषयम्, अहमेवमनुभूतवान् यदेतस्मिन् दर्शने सम्यक् प्रवेष्टुमपि समर्थो नाऽभूवमहम् इति। एकाकी छात्रोऽहमासम् विशिष्टाद्वैतदर्शनस्य डॉ० सत्यव्रतसिंहश्चाऽऽसीद् विशिष्टाद्वैताचार्यः। डॉ० सत्यव्रतसिंहोऽयं दक्षिणदेशं गत्वा विशिष्टाद्वैतदर्शनं गुरुमुखात् सम्प्रदायपरम्परयाऽधीतवान् स्वपूर्वाऽवस्थायाम् इत्यहं कथञ्चिद् ज्ञातवान्। पारिवारिकसमस्याग्रस्तो विशिष्टाद्वैताऽध्ययनाऽनुरागसमन्वितश्चाऽहं तन्निकटं गत्वा निवेदितवानित्थम्—'सत्यपि योग्ये गुरौ सत्यामप्यध्ययनेच्छायां परिमितत्वादध्ययनकालस्य अपरिमितत्वाच्चाऽध्ययनविषयस्य विशिष्टाद्वैतदर्शने निजप्रवेशं समुचितं न विभावयामि। भवद्भिर् दक्षिणदेशं गत्वा यया पद्धत्या सम्प्रदायस्याऽस्याऽध्ययनं कृतम् किं तयैव पद्धत्या दक्षिणदेशं गत्वाऽहमपि सम्प्रदायमिममध्येतुं शक्नोमि? तादृशाऽध्ययनस्य मम महतीच्छा वर्तत इति।' श्रुत्वा चैतत् प्रसन्नवदनाः प्रोफेसरसिंहमहोदया एवमुक्तवन्तः—'किं वस्तुतस्त्वं दक्षिणदेशं गत्वा विशिष्टाद्वैतमध्येतुमिच्छसि? प्रसिद्धस्य मैसूरुनगरस्थस्य श्रीब्रह्मतन्त्रपरकालमठस्याधिपतयः श्रीलक्ष्मीहयवदनदिव्यपादुकासेवकश्रीमदभिनवरङ्गनाथपरकालस्वामिनः स्वकीयोत्तरदेशयात्राप्रसङ्गे लखनऊनगरे यदा

समायातास्तदोत्तरदेशीयान् छात्रान् विशिष्टाद्वैतदर्शनमध्यापयितुं तैर् निजेच्छा प्रकटिताऽऽसीत् । किन्तु ते तप्तशङ्खचक्रादिरूपदीक्षां प्रदायैवाऽध्यापयिष्यन्ति । यदि त्वं वस्तुतस्तत्र गत्वाऽध्येतुमिच्छसि तर्हि तेभ्योऽहं पत्रं प्रेषयामि।' मैसूरुनगरं गत्वा ममाऽध्ययनमियत्सुकरमिति मया न कदापि चिन्तितमासीत् । सर्वेश्वर एव मयि प्रसन्नो यः प्रोफेसरसत्यव्रतसिंहमाध्यमेन मम प्रियं चिकीर्षति। तत्कालमेवाऽहमध्ययनविषयिणीं निजां दृढामिच्छां प्रकटितवान् । आरब्धः पत्रव्यवहारः प्रस्थितश्चाऽहं १९६३ तमवर्षस्य सितम्बरमासे मैसूरुनगरं प्रति। तत्र श्रीवैष्णवसम्प्रदाये दीक्षां प्रदाय श्रीलक्ष्मीहयवदनदिव्यपादुकासेवकश्रीमद-भिनवरङ्गनाथपरकालस्वामिपादैर् यन्मह्यं सम्प्रदायज्ञानं प्रदत्तं स एवास्ति मम जीवनस्यार्जितोऽक्षय्यो निधिः । तेनैव निधिनाऽद्यापि समृद्धोऽहं कथं वा सर्वस्यैतस्य निमित्तभूतानां डॉक्टरसत्यव्रतसिंहानामधमर्णो न स्याम् ।

मैसूरुनगरात् प्रतिनिवृत्तोऽहं विशिष्टाद्वैतदर्शननिष्णातत्वेन जनैरङ्गीकृतः। यद्यप्यद्याप्यहं विशिष्टाद्वैतपण्डितम् आत्मानं न मन्ये तथाप्येतत्तु सुतरां वक्तुं शक्यते यद् गुरुजनानां कृपया श्रीवैष्णवसम्प्रदायविषये श्रद्धासमन्वितविशिष्ट-बुद्धिसम्पन्नोऽहमभूवम् इति । एतद् यन्मम स्वरूपं जातं तत्र श्रीमन्तः प्रोफेसर-सत्यव्रतसिंहमहोदया एव हेतुभूताः ।

एतदनन्तरं मदीयं शोधकार्यं प्राचलत् । एतत्कार्यं परिवारजनसाहाय्यापेक्षं नाऽऽसीत् । मोतीमहलच्छात्रावासे निवासो व्यक्तिगतरूपेणाऽध्यापनादर्जित-धनेन दैनिकाऽऽवश्यकतानां परिपूर्तिश्चेत्युभयमपि परिवारजनसाहाय्यनिरपेक्ष-मासीत् । १९६७ तमे वर्षे मम शोधकार्यं परिपूर्णतां गतम् । इदानीं भाविजीविकाविषयकचिन्ताग्रस्तमनस्कोऽहमभवम् । जीवनस्य काचिदपि निश्चिता सरणिर् मम नयनयोः पुरस्तान्नाऽऽसीत् । मम पितृपादा अपि मम जीवनस्य विषये 'किं वा करिष्यत्यसौ निजजीवने' इति भृशं चिन्ताकुला आसन् । पुनः प्रोफेसरसत्यव्रतसिंहमहोदया एव मम रक्षकत्वेनोपस्थिता अभवन् । अतत्यस्य लक्ष्मणपुरविश्वविद्यालयस्य संस्कृतविभागे गुरुवर्याः डॉक्टर-अतुलचन्द्रवन्द्योपाध्यायमहोदयाः तदानीं रीडरपदम् अलङ्कुर्वन्ति स्म । एते विद्वद्वर्या गोरखपुरविश्वविद्यालये प्रोफेसरपदे नियुक्तिं प्राप्तवन्तः । तत्स्थाने कस्यचित् प्रवक्तृपदे नियुक्तिर् आसीत् करणीया । डॉक्टरसत्यव्रतसिंहमहोदया-नामनुग्रहवशादेवाऽहमस्थायितया तत्स्थाने विनियुक्तो जातः । तदानीं लब्धा विनियुक्तिः क्रमेण पल्लविता पुष्पिता फलिता च ।

डॉक्टरसत्यव्रतसिंहमहोदयानां यादृशोऽनुग्रहो यादृशी कृपा च मय्यासीत् तस्य सर्वस्य किं कारणम् इत्यहं बहुधा विचारयामि । लोके कानिचित् प्रीतिपात्रताकारणानि प्रथितानि सन्ति, किन्तु मद्विषये नैकमपि तादृशं कारणम् आसीत् प्रभावि । आर्थिकसमृद्धिदृष्ट्याऽहमासम् शून्यः । शासकीयप्रभाव-दृष्ट्याऽपि शून्य एव । जन्मना ते क्षत्रियपुङ्गवा आसन्, अहमासम् ब्राह्मणः । अत एव यदहं वच्मि यत् 'तेषां मयि निर्हैतुकी कृपा आसीद्' इति तदनायासमेव प्रमाणीभवति ।

तत्सम्बद्धसंस्मरणराशितः कानिचिदेव संस्मरणान्यत्र मया विनिबद्धानि, सर्वेषामपि संस्मरणानां प्रस्तोतुमशक्यत्वात् । प्रशासकरूपेण तेषां क्षत्रशक्ति शिक्षकरूपेण ब्रह्मशक्तिञ्चाऽहमसकृद् अन्वभवम् । एतस्य शक्तिद्वयस्य तेष्वपूर्वः समावेश आसीत् । अत एवाऽहं वच्मि—

क्षत्रशक्त्या वृतो ब्रह्मशक्त्या स्तुतो
जन्मना क्षत्रियः कर्मणा ब्राह्मणः ।
भीमकान्तैर्महीभृद्गुणैर्मण्डितो
रत्नयादोभिरब्धिर्नु सत्यव्रतः ॥

भवतु, विद्वद्वर्येभ्यो गुरुवर्येभ्यः साञ्जलिं प्रणतिं विनिवेद्य विरमाम्यशक्य-गुणगणगणनारूपोपक्रमाद् इति ।

—०—

**डॉ० हर्षनारायणः**
लखनऊ

# हिन्दुसञ्ज्ञा-शतश्लोकी

स्वारस्यं हिन्दु-सञ्ज्ञायाः कैश्चिदाशङ्क्यतेऽधुना ।
तत्सम्प्रधारणायात्र विचारो मे प्रवर्तते ॥१॥

हिन्दु-शब्दो विदेशीयः कुत्सार्थश् चेति वा न वा,
वाङ्मये विद्यमानेऽतिप्राचीने नैव दृश्यते ॥२॥

प्राक्तमस् तु प्रयोगोऽस्य **पुराणे कालिकाभिधे** ।
स तु यवनकालीनस्, तस्य श्लोकोऽयमुच्यते—

'कलिना बलिना नूनमधर्माकलिते कलौ
'यवनैर् घोरमाक्रान्ता हिन्दवो विन्ध्यमाविशन् ।' ॥३-४॥

स्कान्दे **शिवरहस्याख्ये** ग्रन्थे ऽप्येवमुदीर्यते—
'हिन्दुधर्म-प्रलोप्तारो भविष्यन्ति कलौ युगे ।' ॥५॥

**मेरुतन्त्रे** त्रयस्त्रिंश-प्रकाशे ऽधस्तने स्थले
प्रयोगो हिन्दु-शब्दस्येत्युच्यते कैश्चिदप्युत—
'पश्चिमाम्नायमन्त्रास् तु प्रोक्ता पारस्यभाषया ।
'अष्टोत्तरशताशीतिर्, येषां संसाधनात् कलौ
'पञ्च खानाः, सप्त मीरा, नव शाहा महाबलाः
'हिन्दुधर्म-प्रलोप्तारो जायन्ते चक्रवर्तिनः ।
'हीनं च दूषयत्येव हिन्दुरित्युच्यते, प्रिये !

'पूर्वाम्नाये नवशतं षडशीति: प्रकीर्तिता:
'फिरङ्गिभाषया मन्त्रास्, तेषां संसाधनात् कलौ
'अधिपा मण्डलानां च सङ्ग्रामेष्वपराजिता: ।
'इंरेजा नव षट् पञ्च लण्ड्रजाश् चापि भाविन: । ।।६–११।।

लक्ष्मणपुरतश् चापि मुम्बईत: प्रकाशिते
पुस्तके **मेरुतन्त्रस्य** द्वेऽस्मद्दृष्टिपथे स्थिते । ।।१२।।

उपर्युदाहृता: श्लोका न सन्त्येव तयो: क्वचित्—
त्रयस्त्रिंशे त्रयोविंशे प्रकाशेऽन्यत्र वा पुन: । ।।१३।।

यश चन्द्रकान्ततर्कालङ्कार इत्याह्वय: सुधी:
तान् **भविष्यपुराणो**क्ताञ् छ्लोकानिच्छति स स्फुटम् । ।।१४।।

यद् **भविष्यपुराणं** तु मुम्बईत: प्रकाशितम्
विद्यन्ते नैव ते तस्मिन्, न जानेऽन्यत्र का कथा । ।।१५।।

'सप्तसिन्धु'—पदं किन्तु प्राप्यते तत्र सुस्फुटम्—
'सप्तसिन्धुर् यावनी च',-'सप्तसिन्धुस्' तु संस्कृतम् ।[१] ।।१६।।

अभिधानान्तरं प्रोक्तं तत्रैवं भारतस्य च—
'सिन्धुस्थानमिति ज्ञेयं राष्ट्रमार्यस्य चोत्तमम् ।'[२] ।।१७।।

द्वितीया जोनराजीया या स्याद् **राजतरङ्गणी**
कश्मीरैतिह्यभूता च तत्र 'हिन्दु'-पदं क्वचित्—
'हिन्दव: सूहभट्टेन बलाद् ये पीडिता भृशम्
परदेशं गता ते तु विभ्रतो वेशकल्पनाम् ।'[३] ।।१८–१९।।

**अद्भुतरूपकोशे** च, **रामकोशे** तथैव च,
**हेमन्तकविकोशे** च, 'हिन्दु'रित्युपलभ्यते । ।।२०।।

पारस्यां हिन्दु–शब्देन कृष्णवर्णोऽभिधीयते,
दयितो, मोषको, दासो, लुण्टाकस्, तस्करस् तथा ।[४] ।।२१।।

हिन्द्वभिधानभाजश् च सर्वे भारतवासिन:,
मुस्लिमा अपि देशीया:, क्वचित् पारस्य-वाङ्मये । ।।२२।।

'चत्वारो हिन्दवः केचिदेकस्मिन् "मस्जिदे"ऽभवन्
'ईश्वराराधनायेति' जलालुऽद्दीनरूमि–वाक् ।[5] ॥२३॥

गजदन्तः समायातः 'हिन्दु''-देशान् मुहुर् मुहुः
इत्युल्लेख आयाति सुषा–या राजपत्रके ॥२४॥

सिन्धून् 'हिन्दून्' प्रचक्षाते सम्राजौ बुद्धकालिकौ
दारियोश-क्षयार्षाख्यावीरानीयाविति स्थितिः । ॥२५॥

इब्रानी-वाङ्मये हिन्दुर् 'हो (द्) दू' इत्यभिधीयते ।
'इन्दोई' (Indoi) हिन्दवः प्रोक्ता हेरोदोतस्-कृतौ तथा ।[6] ॥२६॥

यौनानैरिण्डियेत्युक्तौ देशोऽयं भ्रष्ट-शिक्षया[7]
सिन्धुरिण्डसिति प्रोक्तो, हिन्दुरिण्डोसिति श्रुतः । २७॥

इत्सिंगो ह्वेन्त्सियांगश् च भारतस्याभिधानतः
'हि्सन्तु'-'स्हिन्तु'-'इन्तु'-शब्दानां प्रयोक्तारौ प्रमादतः ।[8] ॥२८॥

ह्वेन्—त्सियांगस्य 'ह्वेन्-तौ' तु जायते सैन्धवार्थभाक् ।
अन्यत्रापि क्वचिद् धिन्दु-शब्दो रूपान्तरे स्थितः । ॥२९॥

'सिन्धुतक्षशिलादिभ्योऽणञौ' इत्याह पाणिनिः
'सिन्धु'-शब्दं प्रयुञ्जानः सर्वथा देशवाचिनम् ।[9] ॥३०॥

'ह्प्तहिन्दू'- वचोऽवेस्तासंहितायामुदाहृतम् ।
'सप्तसिन्धु'-पदस्यैतत् त्वपभ्रंश इति स्थितिः ।[10] ॥३१॥

'सप्तसिन्धु'-पदं वेदे क्वचित् स्याद् देशवाचकम् ।
केवलं 'सिन्धु'-शब्दोऽपि तदर्थे दृश्यते क्वचित् ।[11] ॥३२॥

'स'-वर्णस्य परीणामो 'ह'-वर्णो दृश्यते भृशम् ।
अस्माकमपि भाषासु, नान्य—भाषासु केवलम् । ॥३३॥

'सर्वे' इत्युच्यते 'सब्बे' इति मुल्तान-वासिभिः ।
'हब्बे' इति विकल्पोऽस्य व्यवह्रियत एव तैः । ॥३४॥

सिन्ध्यां 'श्वसुर'-शब्दश् च 'सहुरो' भवति स्फुटम् ।
लाहौरीयोपपंजाब्यां 'पैसा' 'पैहा' भवत्यहो ! ॥३५॥

मानसे 'केसरी'-शब्दः 'केहरी'-ति प्रयुज्यते ।
'पुष्पं' 'पुहुप' इत्याहुश् च-'अस्ति'-स्थाने च 'है' इति । ॥३६॥

'चतुर्दश'-पदस्थाने 'चौदह' इति भण्यते ।
वेदेऽप्येवं परीणामात् 'सरितो' 'हरितो भवेत् ।[१२] ॥

'सरस्वती' क्वचिद् वेदे हरस्वत्यभिधा ननु ।[१३]
'सिरा' 'हिरा' भवत्येवं वेद एव क्वचित् क्वचित् ।[१४] ॥३८॥

'श्री'—पदं 'ह्री'—पदं जातं यजुष्यारण्यकेऽपि च ।[१५]
असमाख्यप्रदेशे तु 'साड़ी' 'हाड़ी'-ति भण्यते । ॥३९॥

'सिन्धु'-रिन्दुमतीत्युक्ता यतो रामायणे क्वचित्,
'इन्दु'-'सिन्धू'-सजातीयौ शब्दौ भातः मतौ मम । ॥४०॥

'दा' धारणे, यथा चोक्तम्—'अक्रूरो ददते मणिम्' ।[१६]
सम्भवेत् 'हिन्दु'-पाठोऽपि 'सिन्धु'-स्थाने क्वचिच् छ्रुतौ । ॥४१॥

अत्र किं बहुनोक्तेन 'हिन्दु'-सञ्ज्ञार्थ-मार्गणे ?
प्राचीनो 'हिन्दु'-शब्दोऽस्ति नानारूपधरः पुरा । ॥४२॥

पारसीकप्रथाभीतो 'हिन्दु'-सञ्ज्ञां जहाति यः
पारस्यां 'राम'-शब्दोऽपि दासार्थः, स त्यजेन् न किम् ? ॥४३॥

कुत्सार्थो 'ऽफ़ग़ान'-शब्दश् च रोदनार्थत्वतो ननु ।[१७]
किं त्यक्तं स्वाभिधानं तत् त्वफ़ग़ानिस्तानवासिभिः ? ॥४४॥

सैनिकार्थस् तथा 'तुर्क'-शब्दः कान्तार्थकोऽपि च ।
घातकार्थस् तथा 'तुर्कताज़'-शब्दो न त्यज्यते । ॥४५॥

'सलात'-पदमारब्यं भगवत्प्रार्थनार्थकम्
तद्-बहुवचनं रूपं 'सलवात' इति स्थितिः ।
'सलवात'-पदं तूर्दू-भाषायां गालि-वाचकम् ।
तत् त्वेकवचनं तस्यां, 'सलवातें' तथेतरत् । ॥४६-४७॥

हुतात्मार्थकमित्याहुः क़ुर्आने 'शुहदा'-पदम् ।
प्रयुज्यते दुरात्मार्थे तत् तूर्दू-भाषिभिर् ननु । ॥४८॥

'हराम' इति चार्वीयं कुर्आनेऽपि प्रयुज्यते
पवित्रार्थे ऽपवित्रार्थे ऽपि द्व्यर्थं पदमित्यहो ! ॥४९॥

'अल्-मौला' इति पदं चार्व्यामनेकार्थैः प्रयुज्यते—
स्वाम्यर्थं, तच् च दासार्थं, मित्रार्थं, पुत्रवाचकम् । ॥५०॥

अन्धकारार्थकौ कृष्ण-राम-शब्दौ श्रुतौ क्वचित् ।[१८]
तथाऽपि तौ प्रयुज्येते ऽभिधानेषु महात्मनाम् । ॥५१॥

'देव'-शब्दश् च पूज्यार्थः संस्कृते प्राकृतेषु च
पारसी-पह्लवी-ज़न्द-वाक्षु कुत्सार्थतां गतः । ॥५२॥

देवार्थो 'ऽसुर'-शब्दश् च मूलतः वेद-वाङ्मये ।
वेद एवाप्यवेस्तायां पाश्चाद् दैत्यार्थतां गतः । ॥५३॥

स्याद् 'देवानां प्रियो' 'मूर्खो' महाभाष्यात् प्रभृत्यहो !
शिलालेखेष्वशोकस्य महात्मार्थो विशेषतः । ॥५४॥

'बुद्धो' प्राज्ञार्थको 'बुद्धू' हिन्द्यां मूर्खार्थकोऽभवत् ।
'बुद्धूबसन्त' इत्याहुर् वज्रमूर्खं विपर्यात्—
'पंडित सअल सत्थ बक्खाणहिं
'कायहि बुद्ध बसन्त न जानहिं ।' ॥५५-५६॥

'माया' 'प्रज्ञा' भवेद् वेदे, ऽविद्यार्थे शंङ्करादिके ।
प्रयोगे तत्पदस्याद्ये को हि विप्रतिपद्यते ? ॥५७॥

तथैव 'लुर'-शब्दोऽपि पारस्यां प्राज्ञवाचकः ।
मूर्खार्थोऽसावभूदुर्दू-भाषायां प्रायशो ननु । ॥५८॥

निर्लेपार्थ उताज्ञानशून्यार्थः स्यान् 'निरञ्जनः' ।
ब्रह्मज्ञार्थश् च शून्यार्थः निर्गुणब्रह्मवाचकः ।
कबीर-सम्प्रदाये ऽर्था मान्यतामगमन् नमी ।
मायाव्यर्थोऽसुरार्थोऽपि कुत्रचित् तत्र किन्तु सः । ॥५९-६०॥

वेदे दृष्टो 'ऽभियुज्'-शब्दो दस्युचौरादिवाचकः ।
अर्थादर्थान्तरं गत्वा ऽभियुक्तार्थोऽद्य वर्तते । ॥६१॥

'अभियुक्त'-पदं प्राचां प्रामाणिक-परं पुरा
आरोपितापराधार्थे सर्वथाऽद्य प्रयुज्यते । ॥६२॥

'घृणा'-पदं जुगुप्सार्थं करुणार्थमपीति ह ।
तज् जुगुप्सार्थमेवाद्य सर्वैरेव प्रयुज्यते । ॥६३॥

'हिन्दु'-स्थाने प्रयोगार्हो 'वेदान्ती' 'वैदिको' ऽथवा—
विवेकानन्द इत्याह राष्ट्रधर्मोदयेच्छया । ॥६४॥

हिन्दवस् त्वभिधातव्या 'आर्या' वा 'वैदिका' उत,
दुष्टत्वाद् धिन्दु-सञ्ज्ञाया, दयानन्द-मतेन च ।[२०] ॥६५॥

आर्यास् त्रैवर्णिकाः प्रोक्ताः[२१] श्रौतस्मार्ते क्वचित् क्वचित् ।
शूद्रोऽनार्य इति प्रोक्तस्,[२२] तत् त्वद्यत्वे न युज्यते । ॥६६॥

आसीत् किमार्यजातिर् भोः ! काचिद् विश्वे कदाचन ?
यूरोपादावपि ह्यार्या, भारते नैव केवलम् । ॥६७॥

यूरोपीयादयः प्रायो भारतीयास् तथैव च
आर्यजातेर् विशेषाः स्युः कस्याश्चिन्, नात्र संशयः । ॥६८॥

आर्या जातिरजातिर् वा, जातिसामान्यमस्ति तु ।
आर्यवाक्परिवारः स्यादव्याख्येयोऽन्यथा ननु । ॥६९॥

आर्यत्वेनाभिधेयाः स्युश् चार्यावर्तनिवासिनः ।
भारतं दक्षिणीयं किं त्वार्यावर्ताद् बहिष्कृतम् । ॥७०॥

तत् तथाऽप्यार्यशब्देन शास्त्रेष्वेवाभिधीयते
वर्णाश्रमादिभूयिष्ठो भारतीयो महाजनः । ॥७१॥

विप्रतिपत्तयः काश्चित् त्वार्यावर्तस्य सीमनि ।
गङ्गा-यमुनयोर् मध्ये तं हि केचित् प्रचक्षते ।[२३]
हिमवद्-विन्ध्ययोर् मध्ये मनुनाऽभिहितश् च सः ।[२४]
स त्वार्यावर्तं एवाद्य व्यवहाराद् बहिर्गतः । ॥७२-७३॥

स्मो वयं भारताश् चेतीह क्वचित् क्वचिदिङ्गितम्,
सन्ततिर् भरताख्यस्य पूर्वजस्य महात्मनः । ॥७४॥

'उत्तरं यत् समुद्रस्य, हिमाद्रेश् चैव दक्षिणम्,
'वर्षं तद् भारतं नाम, भारती यत्र सन्ततिः।'[२५] ॥७५॥

इति विष्णुपुराणोक्त्या स्मो वयं 'भारता' ननु
भरतः क? इति प्रश्नोऽप्यवधेयोऽस्मदादिभिः। ॥७६॥

जम्बूद्वीपाधिपोऽग्नीध्रस्, तत्पुत्रो नाभि–नामकः,
हिमालयाधिपो योऽभून् नाभिवर्ष-पतिस् तथा। ॥७७॥

ऋषभो नाभि-पुत्रश् च भारतस्य पिताऽभवत्।
भारतं भरतस्याभूच् चक्रवर्ति-महात्मनः। ॥७८॥

सुपुत्रमृषभो राजा भरताख्यमजीजनत्।
'तस्मात् तु भारतं वर्षं तस्य नाम्ना महात्मनः।'[२६] ॥७९॥

'ऋषभाद् भरतो जज्ञे वीरः पुत्रशताग्रजः।
'सोऽभिषिच्याथ भरतं पुत्रं प्राव्राज्यमास्थितः।
'हिमाह्वं दक्षिणं वर्षं भरताय न्यवेदयत्।
'तस्मात् तद् भारतं वर्षं तस्य नाम्ना विदुर् बुधाः।'[२७] ॥८०-८१॥

क्वचित् क्वचित् तु दौष्यन्तेर् भरताद् भारतं महत्।
महाभारत इत्युक्त, ब्राह्मणेषु विशेषतः,[२८]। ॥८२॥

भरता भारती-भक्ता[२९] वैश्वामैत्रजनात्मकाः[३०]
भारतीयैकदेशीयाः प्रसिद्धा वेदवाङ्मये। ॥८३॥

मनुर् भरत इत्युक्तः पुराणेषु क्वचित् क्वचित्।
तन्नाम्ना भारतं वर्षमित्युक्तं तत्र तत्र च। ॥८४॥

'भरणाच् च प्रजानां वै मनुर् भरत उच्यते,
'निरुक्त-वचनाच् चैव, वर्षं तद् भारतं स्मृतम्'[३१]। ॥८५॥

अग्निर् भरत इत्युक्तोऽसकृच् च वेदवाङ्मये,
देवेभ्यो हव्यभर्तृत्वात्; तद्वर्षं भारतस्मृतम्।'[३२] ॥८६॥

इदं सर्वं बिभर्तीति भरतोऽस्ति प्रजापतिः—
इत्यपि स्फुटमेकत्र वक्ति ज्ञातपथी श्रुतिः।[३३] ॥८७॥

हिमवर्षं, नाभिवर्षं, भारतं वर्षमप्युत,
तथाऽजनाभवर्षं च—देशोऽयं बहुधा स्मृतः । ॥८८॥

प्राक्काले हिमवर्षाख्यामलभद् भारतं महत् ।
ततश् च नाभिवर्षाख्यां नाभेर् वर्षत्वतोऽपि च ।[३५] ॥८९॥

ऋषभो नाभि-पुत्रोऽभून् नाभिवर्ष-महीपतिः ।
तदाऽजनाभवर्षाख्यामभजद् भारतं पुनः ।[३६] ॥९०॥

ऋषभाद् भरतो जज्ञे, तन्नाम्ना भारतं स्मृतम् ।
तृतीये चरणे प्राप्तं तद् वर्षं भारताह्वयम् । ॥९१॥

अपौरुषेयधर्मोऽयं हिन्दु-धर्मः पुनर्णवः
विवर्द्धितो विशेषेण मनुर्षिश्रमणादिभिः । ॥९२॥

धर्म एव समाख्याऽस्य, पुराणो धर्म इत्यपि,
धर्मः सनातनो,ऽप्यार्षधर्मो, धर्मश् च मानवः । ॥९३॥

प्रशस्यते मनोर् मार्गो वैवस्वतमनोर् ऋचा—
मा 'नः पथः पित्र्यान् मानवादधि दूरं नैष्ट परावतः ।'[३७] ॥९४॥

मनोरपेक्षया नूतना वेदमूला **मनुस्मृतिः** ।
न **मनुस्मृति**-बद्धोऽतो मानवो धर्मइष्यते । ॥९५॥

अतोऽयं मानवो धर्मश्, चार्षधर्मः, सनातनः ।
वयं च मानवा ज्ञेया हिन्दुत्वस्याभिमानिनः । ॥९६॥

धर्मतो वेद-वेदान्त-पारम्पर्यं भजन्ति ये
त एव हिन्दवो, हिन्दु-ब्रुवा अन्ये च 'हिन्दवः' । ॥९७॥

वेदान्ते धर्मसारः स्यादतो वेदान्तिनो वयम् ।
'तिलेषु तैलवद् वेदे वेदान्तः सुप्रतिष्ठितः ।'[३८] ॥९८॥

पूर्वस्माद् वेदतोऽस्माकं प्रवृत्ता धर्मसंस्कृतिः ।
केवलं वैदिका न स्मो वेदपूर्वङ्गमा वयम् । ॥९९॥

भारतोद्भूतधर्माणां दर्शनानां च संस्कृतेः
दायाद्यस्याभिमानित्वं हिन्दुत्वं सर्वसम्मतम् । ॥१००॥

हिन्द्वार्यमानवाः सञ्ज्ञास् तिस्रोऽप्येवं सुसङ्गताः,
सर्वत्र हिन्दु-नाम्नैव प्रथिता भूतले वयम् । ॥१०१॥

प्राधान्याज् जातिसञ्ज्ञाया, राष्ट्रत्वानुदयात् तथा,
हिन्दु-शब्द-प्रयोगस्य वैरल्यं वाङ्मये पुरा । ॥१०२॥

पुरा तु ब्राह्मणाः, शूद्राः, बङ्गाः, कश्मीरका वयम्,
दाक्षिणात्यास् तथा प्राच्याः, शैवाः, शाक्ताश् च, वैष्णवाः । ॥१०३॥

भारतीये युगे मध्ये मुस्लिमीये विशेषतः
हिन्दुसञ्ज्ञाप्रयोगस्य प्रचारो दृश्यते भृशम् । ॥१०४॥

तदा प्रभृति लोकेऽस्मिन् सा सञ्ज्ञा रूढतां गता ।
अतः सैव प्रयोगार्हा, रूढिर् योगाद् बलीयसी । ॥१०५॥

—o—

**टिप्पण्यः**

१. **भविष्यपुराणम्**, प्रतिसर्ग-पर्व, खण्डः १, अध्यायः ५, श्लोकः ३६

२. तत्रैव ३.२.२०

३. जोनराजः, (द्वितीया) **राजतरंगिणी**, कस्मिंश्चिद्धस्तलेखे श्लो० ८५८ अनन्तरम्

४. अगर आँ तुर्के शीराज़ी बदस्त आरद दिले मा रा
ब-ख़ाले हिन्दु-अश बख़्शम समरक़न्दो बुख़ारा रा (हाफ़िज़क)
तुर्के रोज़ आख़िर चि बा-ज़र्री सिपर
हिन्दुए शब रा ब-तेग़ अफ़गन्दः सर (रूमी)
ख़त बढ़ा, ज़ुल्फ़ें बढ़ीं, काकुल बढ़े, गेसू बढ़े
हुस्न की सरकार में जितने बढ़े हिन्दू बढ़े (ज़ौकः)

५. चार हिन्दू दर यके मस्जिद शुदन्द
बह्रे ताअत राकिअ ओ साजिद शुदन्द (रूमी)

6. 'The word Hindu (in the form 'Hidu') applied by Darius (522-486 B.C.) and Xerxes (486-465 B.C.) to the territory and people to the west and to the east of the great river Sindhu . . . .' Herodotus (Book 5, para 3,

Vol. III, p. 5—Loeb Series) Vide the Nagkh-i Rustam Inscription of Dārya-ush and the Persepolis Inscription of Kshayarsha (Xerxes) in *Select Inscriptions*, D. C. Sircar, ed., No. 4, p. 10 and No. 5, p. 12. 'The name "Hindu" appears in the inscıiption on the monument of Darius Hystaspes near Persepolis (c. 486 B.C.): Hô(d)dū in the later Heb. literature (Est 1189); and in modern form (c. 440 B.C.) in Herodotus (iii.98). 'Hinduism', *Encyclopaedia of Religion and Ethics*, James Hastings, ed., Vol. II (1959), p. 686. 'India' is used in Aramaic also. See Esther 1.1; 8.9.

७. भ्रष्टोच्चारणेनेत्यर्थः

8. '...the names of India (T'ien chu) are various and perplexing as to their authority. It was anciently called Shin-tu, also Hien-tu; but now, according to the right pronunciation, it is called In-tu. . . . In Chinese the name signifies the Moon. . . . so it is called In-tu'. *Buddhist Records of the Western World*, tr, Samuel Beal, from the Chinese of Hiuen-Tsang (London : Trübner & Co., 1884), Vol. I, p. 69.

९. पाणिनिः, **अष्टाध्यायी** ४.३.९३

१०. **वेन्दिदाद**, द्वितीय फ़र्गार्द

११. ऋग्वेदः ८.२४.२७

१२. अथर्व० १३.२.६—८, २३

१३. ऋ० २.२३.६

१४. अथर्व० १.१७.३; ७.३५.२

१५. यजुः० ३१.२२; तैत्तिरीयारण्यकम् ३.१३

१६. "दण्डो" ददतेर् धारयति-कर्मणो—"अक्रूरो ददते मणिम्" (हरिवंश-पुराणम्) —इत्यभिभाषन्ते । यास्कः, **निरुक्तम्** १.२.१

१७. दृश्यतामत्र **तारीख़े फ़िरिश्तः** (उर्दू अनु०, देवबन्दः, १९८३) खण्डः १, पृ० ८३

१८. ऋ० १.११३.२ (कृष्णवर्णा रात्रिः, कृष्यतेर् निकृष्टो वर्णः—**निरुक्तम्** २.२०); ऋ० १०.११७.७; १०.३.३ ('रामं कृष्णं शार्वरं तमः' इति सायणः)

१९. ऋ० ५.४.५

२०. 'हिन्दुशब्दस्यार्थः कृष्णवर्णो, दस्युः, पाषाणादिमूर्तिपूजको, दासः, ईश्वरोपासनाविरहश् चेत्यादयोऽर्थाः।' **दयानन्द-ग्रन्थमाला**, भाग २, पृ० ८०७। अपि दृश्यतां-दयानन्दः, **भ्रान्तिनिवारण**, पृ० ३३; **उपदेशमञ्जरी**, (१९८४), पृ० ६४

२१. **गौतम-धर्मसूत्रम्** २.३.२

२२. तत्रैव २.१.६६

२३. 'गङ्गायमुनयोरन्तरेऽप्येके, यावद् वा कृष्णमृगो विचरति तावद् ब्रह्मवर्चसमित्यन्ये।' **वसिष्ठ स्मृतिः** १.११–१२; 'गङ्गायमुनयोरन्तरमित्येके।' **बौधायन-स्मृतिः** १.२८

२४. 'आसमुद्रात् तु वै पूर्वादासमुद्रात् तु पश्चिमात्,
तयोरेवान्तरं गिर्योरार्यावर्तं प्रचक्षते॥ मनु० २.२२
'कः पुनरार्यावर्तः ? प्रागादर्शात्, प्रत्यक् कालकवनाद्, दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम्।' **महाभाष्यम्** ६.३.१०९; 'आदर्शादयः पर्वतविशेषाः' (**प्रदीपः**) 'आदर्शः' कुरुक्षेत्र-पर्वतः, 'कालकवनं' प्रयागः, 'पारियात्रः' विन्ध्य एवेति। 'मनूक्त-मध्यदेश एवात्र भगवतोऽभिमतः' इत्यन्ये।' (**उद्द्योतः**) तु० 'प्रागदर्शनात्, प्रत्यक् कालकवनाद्, दक्षिणेन हिमवन्तमुदकपारियात्रमेतदार्यावर्तम्।' **बौधायन-धर्मसूत्रम्** १.२.१०

२५. **विष्णु-पुराणम्** २.३.१

२६. **मार्कण्डेय-पुराणम्** ५.३.४१. तु० **वि०पु०** २.१.३२; **श्रीमद्भागवतम्** ५.४.९

२७. **वायु-पुराणम्** १.३३, ५१—५२

२८. **महाभारतम्**, आदि-पर्व ७४.१३१; **ऐतरेयब्राह्मणम्** ८.२३; **शतपथ-ब्राह्मणम्** १३.४.११; ५.४.१३

२९. आप्री सूक्तानि (ऋ०१.२२.१०; १.१४२.९; १.१८८.८; २.१.११; २.३.८; ३.४.८)

३०. 'विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम् ।' ऋ० ३.५३.१२

३१. **वायुपु०** ४.५.७६; **ब्रह्माण्डपु०** पू० भा० १६.६ । तु० **मत्स्यपु०** ११३.५—६; **शिवपु०**, उमा-संहिता १८.१

३२. ऋ० ४.२५.४; **तैत्तिरीयसंहिता** २.५.९.१; **तैत्तरीयब्राह्मणम्** ३.५.३.१; **कौषीतकिब्राह्मणम्** ३.२; **शतपथब्राह्मणम्** १.४.२.२

३३. **शतपथ०** ६.८.१.१४

३४. **विष्णुपु०** २.१.१८.२७

३५. **श्रीमद्भागवतम्** ५.७.३

३६. तत्रैव ५.४.३

३७. ऋ० ८.३०.३

३८. **मुक्तिकोपनिषद्** १.९

—o—

**डॉ० अमरनाथ पाण्डेय:**
संस्कृत-विभागाचार्याध्यक्ष:
काशीविद्यापीठम्, वाराणसी

# पाठालोचनविद्या

प्राचीनकालेऽधुनातनपाठालोचनसिद्धान्तस्य स्वरूपं नासीत् । ये पाठा: समीचीना: समाम्नातास्त एव ग्रन्थेषूपलभ्यन्ते । यद्यपि विभिन्नासु मातृकासु दृश्यन्ते विभिन्ना: पाठा:, किन्तु तेषामुपयोग: पाठालोचनदृशा न विहित इति विद्वदुत्तमानां प्रत्यक्षम् । प्राचीनटीकाकृतो विभिन्नपाठानां महत्त्वं न जानन्ति स्म इति वचनं समीचीनं नास्ति, यत: प्राचीनटीकाकृतो विभिन्नान् पाठान् समुद्धरन्ति । नीलकण्ठो भारतभावदीपोद्घाते सूचयति—कथं तेन भारतस्य भिन्नेभ्य: प्रदेशेभ्यो महाभारतस्य पाठा: समाहृता: कथं च पाठसमाहरणे युक्तपाठनिर्धारणं तस्य लक्ष्यमासीत्—

> "बहून् समाहृत्य विभिन्नदेश्यान् कोशान् विनिश्चित्य च पाठग्र्यम् ।
> प्राचां गुरूणामनुसृत्य वाचमारभ्यते भारतभावदीप: ॥"

टीकाकारेषु प्रसिद्धो मल्लिनाथ: स्वटीकासु प्रचलितानां पाठानां निर्देशं करोति । यथा रघुवंशसञ्जीविन्याम्—"कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि" (३/१२) इत्यत्र 'गर्भभर्मणि' इत्यस्य स्थाने 'गर्भकर्मणि' इति, 'रथादीति' (४/३०) इत्यस्य स्थाने 'रथनीकमि' ति, "राजापि लेभे सुतमाशु तस्मादालोकमर्कादिव जीवलोक:" (५/३५) इत्यत्र 'आलोकम्' इत्यस्य स्थाने 'चैतन्यमि'-ति, "सूतात्मजा: सवयस: प्रथितप्रबोध प्राबोधयन्नुषसि वाग्भिरुदारवाच:" (५/६५) इत्यत्र 'सूतात्मजा:' इत्यस्य स्थाने

'वैतालिकाः' इति, "रराज धाम्ना रघुसूनुरेव" (६/६) इत्यत्र 'धाम्ना' इत्यस्य स्थाने 'भूम्ना' इति, "प्रालम्बमुत्कृष्य यथावकाशम्" (६/१४) इत्यत्र 'प्रालम्बमि'-त्यस्य स्थाने 'प्रावारमि'-ति, "स राजलोकः कृतपूर्वसंविदा-रम्भसिद्धौ समयोपलभ्यम्" (७/३१) इत्यत्र 'समयोपलभ्यमि'-त्यस्य स्थाने 'समरोपलभ्यमि'-ति, "गेये को न विनेता वाम्" (१५/६६) इत्यस्य स्थाने "गेये केन विनीतौ वाम्" इति च पाठः। एवं प्राचीनकाले टीकाकाराणां दृष्टिः पाठालोचनसिद्धान्तसंस्पर्शानुप्राणिताऽसीदिति वक्तुं शक्यम्।

टीकाकृन्मूर्धन्येन राघवभट्टेनापि अभिज्ञानशाकुन्तलटीकायामर्थद्योत-निकायां बहुत्र पाठान्तराणि दत्तानि, तेषां व्याख्यानञ्चापि प्रकाशितम्। यथा—'क्वचित् शमीलताम् इति पाठः' (१/१६) इति, " 'आत्मसदृश……' इति पाठे आत्मनः सदृशे ईक्षणे तैर्वल्लभाभिः प्रियाभिः।" (१/२३) इति, "क्वचित् 'रूपोच्चयेन घटिता मनसा कृता नु' इति पाठः" (२/८) इति, " 'क्वत्वं क्षामकपोलयुग्भृशमुरः' इति 'क्लान्ततरोंऽसयुग्ममधिक नम्र छविः' इति पाठ उद्देश्यप्रतिनिर्देशप्रक्रमभङ्गः प्रकामविशब्दयोरर्थपौनरक्त्यं च परिहृतं भवति।" (३/७) इति, "क्वचित् पुस्तके 'मअणवाहिआओ वि कण्णआओ अत्तणो ण प्पहवंति' इति पाठः" (तृतीयाङ्के) इति, "क्वचित् 'तदद्य देवीं वसुमतीमन्तरेणोपालम्भमुपाक्रतोऽस्मि' इति पाठः सुबोध एव" (पञ्चमाङ्के) इति च पाठान्तराणि निर्दिष्टानि। अन्यास्वपि टीकासु पाठान्तराण्युपलभ्यन्ते।

वर्तमानकाले पाश्चात्त्यविद्वद्भिः पाठालोचनसिद्धान्तस्याविष्कारः कृतः। समीचीनं पाठं विना ग्रन्थतात्पर्यमवगन्तुं जनो न शक्नोतीति हेतोः पाश्चात्त्याः समालोचनसमन्वितसम्पादने बद्धानुरागा बद्धपरिकराश्च लक्ष्यन्ते। तैरेव प्रथमं विशिष्टग्रन्थानां महत्त्वपूर्णानि संस्करणानि प्रकाशितानि। अनेन संस्कृतवाङ्मयरहस्यं जिघृक्षूणां महानुपकारो भवति। मान्येन मोक्षमूलरभट्टेन चतुर्विंशतिवर्षैः परिश्रम्य ऋग्वेदस्य सायणभाष्यमण्डितस्य सम्पादनं विहितम्। तत्र भूमिकायां मोक्षमूलरमहाभागेन पाठालोचनसिद्धान्तस्यानेके पक्षाः समुद्घाटिताः। सम्पादने बहुमातृकाणां नास्त्यपेक्षेति ग्रीकलेटिनभाषाविज्ञानस्य राद्धान्त इति मोक्षमूलरो निर्दिशति—

"We have learnt from Greek and Latin philology that a great number of Mss. is not at all desirable for Critical purposes. In most cases, those numerous Mss., which have been collated for classical authors have only served to spoil

the text; to make the reading of doubtful passages still more doubtful."

अनेकमातृकाश्रयादाश्लिष्टाः पाठा बहुत्र ग्रन्थं दूषयन्ति, सन्दिग्धाश्च पाठा अधिकं सन्दिग्धा जायन्ते। एवं भूयस्यो मातृका न श्रेयः साधयन्ति।

पाश्चात्यविद्वद्भिर्मोक्षमूलर - बेन्फे - राथ-बाटलिन्क-मॉनियरविलियम्स-स्टेनकोनोप्रभृतिभिः सम्पादनकला सम्यगलङ्कृता। भारते पण्डितप्रवराणामीश्वरचन्द्रविद्यासागरमहाभागानां योगः प्रशंसामञ्चति। तैरष्टौ मातृका आश्रित्य अभिज्ञानशाकुन्तलस्यालोचनात्मकं संस्करणं प्रकाशितम्। भारतस्यानेके विपश्चितः पाश्चात्यविदुषां संसर्गमवाप्य पाठालोचनसिद्धान्तं सम्यगनुशील्य संस्कृतपालिप्राकृतग्रन्थानां सम्पादनं कृतवन्तः। एवं पाठालोचनसिद्धान्तः शास्त्ररूपेण सम्यक् प्रतिष्ठते। यस्य ग्रन्थस्य सम्पादनं पाठालोचननयेन न क्रियते, तस्य समादरो न भवति।

कीदृश्यो मातृका उपकारं वहन्तीति किञ्चिदुच्यते। प्राचीनानां मातृकाणां विशिष्टं महत्त्वं भवति। ग्रन्थकर्तुः कालदृष्ट्या समासन्ना मातृका विशेषतः प्रमाणम्। प्राचीनमातृकाणां मध्ये या विशेषतः प्रामाणिकी, तामाश्रित्य पाठस्य निर्धारणं कर्त्तव्यम्। यदि कपि मातृका प्राचीनतमा विद्यते, तामाश्रित्य मातृकान्तराणि कलितानि, तदा प्राचीनतमाया मातृकाया विशिष्टं महत्त्वं जागर्ति। अत्र एतदप्यवधेयम्। क्वचन प्राचीनतममातृकायां या आशुद्धयः सन्ति, ता नवीनमातृकासु संशोधिताः सन्ति। अतस्तेषु प्रसङ्गेषु नवीना मातृका आश्रयितव्याः। तत्रानुमानेन समुद्धरणसाहाय्येन च कश्चन समीचीनः पाठो निश्चीयते। समीचीन पाठ एवास्माकं प्रियं वस्तु। भाषाविज्ञानपद्धत्या येषां सन्दर्भाणां परीक्षणमपेक्ष्यते, ते खलु टिप्पणीषु विमर्ष्टव्याः। भिन्नमूलानां मातृकाणां मध्ये का मातृका आश्रयितव्याः काश्च हेया इति निर्धारणं न सुगमं भवति। तत्र यस्या मूलस्याधिकं प्रामाण्यमस्ति, सैव पाठनिर्धारणार्थं स्वीकर्त्तव्या। एतस्मिन् प्रसङ्गे कवेर्भाषाया रीतेश्चापि परीक्षणं श्रेयस्करं भवति। प्रथमाष्टकस्य द्वादशमातृकाणां त्रिधा वर्गीकरणं समासादितं मयेति सूचितं मोक्षमूलरभट्टेन।

एवमपि स्थितिर्भवति। याः खलु मातृका उपलभ्यन्ते, ताः काश्चनाशुद्धीः समानरूपेणाश्लिष्यन्ति। एतादृश्यः कथमपि न स्वीकर्त्तव्याः। तत्र ग्रन्थ-

कर्तुर्भाषा रीतिर्व्याकरणस्य च नियमाः साहायकं विदधति । अत्र विशेषतो व्याकरणमस्माकं शरणं भवति । व्याकरणनियमेन पाठसंशोधनं विधेयम् ।

वैदिकसाहित्यविषये मोक्षमूलरस्यायं विचारः प्रशस्तो भाति । सायणादीनां भाष्येषु ब्राह्मणादीनां तादृशानि वचनानि प्राप्यन्ते, यानि नोपलभ्यन्ते विद्यमानेषु ग्रन्थेषु । तत्रेदमेव समाधानम्—तानि वचनानि भिन्नासु शाखासूपलभ्यन्त इत्येव निर्णेतुं शक्यम् ।

ग्रन्थस्य भाषान्तरमप्युपकरोति, यथानेकबौद्धग्रन्थानां तिब्बतीभाषायामनुवादा उपलभ्यन्ते । अनुवादैरपि पाठसंशोधनं क्रियते । इ० एच० जान्स्टन-महाभागेन सौन्दरनन्दस्यालोचनात्मकं संस्करणं क्लृप्तम् । तेन भूमिकायां प्रकाशितम्—

"The purpose of the present edition is twofold, to give a complete description of the material available in the Mss. so as to facilitate further work by others on the text, and to provide as good a text as possible."

पाठसामग्र्या उपस्थापनम्, येनान्ये सम्पादका ग्रन्थविशेषस्योत्कृष्ट-सम्पादने समर्थाः स्युः । अन्यच्च यथाशक्यं युक्तपाठस्योन्मीलनम् । प्राचीनकाले पाठका मातृकासु तत्र तत्र परिवर्तनं चक्रुः । क्वचन एकस्य पाठस्य पाठान्तराणि दृश्यन्ते । अस्यां स्थितौ समीचीनपाठस्य निर्धारणं दुष्करं भवति । अत्रावधानपूर्वकं समीचीनः पाठो निश्चेतव्यः । क्वचिदनुमानेनापि गृहीताः पाठा बहूपकुर्वन्ति । तैः पाठैः समीचीनपाठा निर्णेतुं शक्याः । प्रकृतेऽभिनवगुप्तस्योक्तिर्विभावनीया—

> "ऊर्ध्वोर्ध्वमारुह्य यदर्थतत्त्वं धीः पश्यति श्रान्तिमवेदयन्ती ।
> फलं तदाद्यैः परिकल्पितानां विवेकसोपानपरम्पराणाम् ॥"

आलोचनात्मकसम्पादने चत्वारि सोपानानि सन्तीति प्राचीनभाषावैज्ञानिकैः प्रतिपाद्यत इति महाभारतस्यालोचनात्मकसंस्करणस्य भूमिकायां निर्दिश्यते—

"The old school of classical philologists distinguish four stages in the work of preparing a critical edition of a classical text—(1) Heuristic—assembling and arranging the entire material consisting of Mss. and testimonia in the form of a genealogical tree. (2) Recensiorestoration of the text of the

archetype, (3) Emendatiorestoration of the text of the author and finally (4) Higher criticism—separation of the sources utilized by the author."

प्रथमं सोपानं तु मातृकाणां सङ्ग्रहः, तासां समुल्लासक्रमस्य प्रदर्शनम्; द्वितीयं मूलमातृकाया अन्वेषणम्; तृतीयं ग्रन्थस्य समीचीनपाठस्योपलब्धिः; चतुर्थं खलु उत्कृष्टसमीक्षा विद्यते । अनेन क्रमेण ग्रन्थस्य समालोचनात्मक-सम्पादने समर्था भवन्ति विज्ञाः ।

ये तत्तच्छास्त्रेषु निष्णाताः सन्ति, त एव ग्रन्थानां सम्पादनेऽधिकृताः । तैर्मातृकापरीक्षणमनु सम्पादनं विधेयम् । एकं पुस्तकमाश्रित्य पुस्तकप्रकाशनं नालोचनसरणिमनुसरति । ये सम्पादनविद्यां न जानन्ति, ते यथेच्छं यत्र तत्र परिवर्तनमनुतिष्ठन्ति, येन भ्रमो जायते । मैसूरविद्यानिलयान्तर्गतकौटिली-यार्थशास्त्रस्य संस्करणं प्रामाणिकमङ्गीक्रियते । श्रीवाचस्पतिगैरोलामहोदय-कृतभाषान्तरयुक्तमर्थशास्त्रं प्रकाशितं विद्यते । तत्राध्यायानां भिन्ना योजना कथमाश्रितेति विस्मयमातनोति । कदाचित् परीक्षास्वपि विभागेनानेनच्छा-त्राणां मिथ्यामत्युदयाद्धानिर्भवतीति न प्रमाणमपेक्षते । क्वचित् सम्पादकेनापि संशोधनं क्रियते मूलानुसन्धानाद् ऋते, तदपि दोषाय । अनुवादमवलम्ब्य श्लोकरचनापि न शास्त्रपद्धतिमनुबध्नाति । श्रीरामचन्द्रशास्त्रिणा बुद्धचरितं सभाषान्तरं सम्पादितं चौखम्बाविद्याभवनेन प्रकाशितञ्च विद्यते । प्रथम-सर्गगताः सप्त श्लोकाः (बुद्धचरितम्, प्रथमः सर्गः, श्लोकाः १–७) अनु-पलभ्यन्ते । श्रीसूर्यनारायणचौधरीकृतं हिन्दीभाषान्तरमाश्रित्य श्रीराम-चन्द्रदासशास्त्रिणा संस्कृतेन सप्त श्लोका निर्मिताः । एवमन्यत्रापि सम्पाद-कैस्तत्र तत्र श्लोका निर्मीयन्ते, यत्र त्रुटितेषु स्थलेषु ते न प्राप्यन्ते । अनया रीत्या सम्पादनकलाया वैज्ञानिकं स्वरूपं कलुषीक्रियते ।

यद्यपि विभिन्नसंस्थानेषु विद्यमानानां मातृकाणां विवरणमुपलभ्यते, तत् साहायकमपि करोति, किन्तु कुत्रचिद् विवरणं नितान्तमशुद्धं प्राप्यते । मया दशरूपकस्य बहुरूपमिश्रकृताया दीपिकाटीकायाः सम्पादने व्यापारितं मनः । बड़ौदास्थितस्य प्राच्यसंस्थानस्य मातृकागारे एक मातृका विद्यते, यस्याः सम्बन्धे मातृकाविवरणे उल्लेखो विद्यते । धनिकस्य टीकाया एका टीका विद्यते धारिककृतेति विवरणादुपलभ्यते । सहर्षं मया पत्रमेकं प्रहितं संस्थानस्य निदेशकस्य सकाशम् । विद्यते धारिककृता धनिकस्य टीकायाष्टीकेति तेन

सूचितम् । यथावसरं मया बड़ौदास्थिते प्राच्यविद्यासंस्थाने मातृका परीक्षिता । तत्र न धारिकस्य काचिट्टीका, केवलं धनिकस्यावलोक एव विद्यत इति ज्ञात्वा खिन्नोऽहं सञ्जातः । महादेवभट्टाचार्यविरचितम् उपसर्गवर्ग इति पुस्तकं प्राप्यते । पुस्तकमिदं विशाखापट्टणे आर्षमुद्राशालया त्रयोदशाधिकैकोनविंशतिशततमे ईसवीये संवत्सरे प्राकाश्यं नीतम् । पुस्तकं मया निपुणं पठितं पर्यालोचितञ्च । तत्र श्लोकद्वयं न प्राप्यते । केवलमेकैव मातृका विद्यतेऽस्य पुस्तकस्य, अतस्तामेवाश्रित्य मया सम्पादनं क्रियत इति विज्ञापितं सम्पादकेन । पुस्तके एकस्मिन् स्थले 'जलनिःसारणे ख्यात उदोहस्तु जलाशयात्' इति पाठ उपलभ्यते । तत्रोदोह इति पदं साधु न विद्यते । यदि शुद्धः पाठ उपलभ्येत, तदा तु महानुपकारो भवेदिति विचारप्रणुन्नचित्तेन मया किञ्चित् मनसि कृतम् । अन्वेषणतत्परेण सम्पादकेन एकैव मातृका प्राप्ता, नान्यस्याः प्राप्तिः सूच्यते मातृकाविवरणैरिति वार्ता मां पीडितवती । एकस्मिन्नवसरे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवने स्थितस्य मम मनसि विचार एवं समुत्पन्नः—'भवेन्नाम काचिन्मातृकोपसर्गवर्गस्यात्र तदा मम शोभनं भागधेयं स्यात् ।' तस्मिन्नवसरे विस्मयसन्देहान्दोल्यमानमानसेन मया विवरणं परीक्षितम् । तत्रैका मातृका विद्यत उपसर्गवर्गस्येति विदित्वाऽहं नितरां प्रसन्नोऽभूवम् । मया मातृका परीक्षिता । तत्र श्लोकद्वयं शुद्धं सुरक्षितञ्चास्ति, यत् प्रकाशितपुस्तके नोपलभ्यते । 'उदोह' इति पाठस्य स्थाने 'उद्दोह' इति समीचीनः पाठोऽप्युपलभ्यते । एवं समाधानमधिगम्य मयोपसर्गवर्गस्य शुद्धमविच्छिन्नं संस्करणं प्रकाशितम् ।

कुत्रचिद् मूलग्रन्थानां परीक्षणेन समीचीनः पाठ उपलभ्यते । डॉ० राघवमहाभागैर्दशरूपकदीपिकाया अयं पाठः स्वीकृतः—'अयं च रसो गुणालङ्कारवशात् संसृष्टिवशादेव कविना पोषणीयः ।' मया दशरूपकदीपिकाया वाक्यस्य एवं शुद्धः पाठो दशरूपकदीपिकायाः संस्करणे दत्तः—'अयं च रसो गुणालङ्कारसंसृष्टिवशादेव कविना पोषणीयः ।' भोजो गुणालङ्कारसंसृष्टिमभिनन्दति । तया रसावियोगः प्राप्यते, अतोऽनुग्रन्थमेव पाठोऽयं प्रकाशितः ।

अलङ्कारशास्त्रग्रन्थेषु काव्यस्योद्धरणान्युपलभ्यन्ते । तान्यपि पाठसंशोधने हितमावहन्ति । वक्रोक्तिजीविते काव्यप्रकाशे च कुमारसम्भवस्याधस्ताद् दत्तः श्लोकः प्राप्यते—

'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥'

अस्मिन् श्लोके 'कपालिनः' इत्यस्य स्थाने 'पिनाकिनः' इति पाठ उपलभ्यते । अनयोः कतरः साधीयानिति आलङ्कारिकाः प्रमाणम् । तत्र कपालिन इति पाठं स्वीकृत्य कुन्तको विवेचयति—"अत्र परमेश्वरवाचकशब्दसहस्रसम्भवेऽपि कपालिन इति बीभत्सरसालम्बनविभाववाचकः शब्दो जुगुप्सास्पदत्वेन प्रयुज्यमानः कामपि वाचकवक्रतां विदधाति ।"—(वक्रोक्तिजीवितम् १/२७) । अत्र कुन्तको वचनवक्रतामुदाहरन् कपालिपदस्यैव विवक्षितार्थैकवाचकत्वं प्रतिपादयति । सत्स्वप्यन्येषु वाचकेषु यत्र विशेषात्मना प्रतिपादयितुमिष्टं तत्र विशेषाभिधायकमेवाभिधानं निबध्नन्ति महाकवयो न तु सामान्याभिधायकमभिधानम् । अतः कपालिपदविन्यासेन सहृदयहृदयाह्लादकारिस्पन्दसौन्दर्यं प्रतन्यते । निर्णयसागरादिप्रकाशितेषु कुमारसम्भवसंस्करणेषु 'पिनाकिन' इति पाठो दत्तः स तु न समीचीन इति कुन्तकस्वीकृतेन पाठेनासन्देहमनुमातुं शक्यम् । द्वयमित्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वमिति मम्मटभट्टः । अत्र निन्दायां तात्पर्यमस्ति । कपालिपदस्यैव जुगुप्साव्यञ्जकतया शोचनीयतोपपत्तौ काव्यानुगुण्यम्, न तु पिनाक्यादिपदस्येति । यद्यप्यभिधायकत्वे पदयोर्द्वयोर्विशेषाभावात् किञ्चिदपि प्रयोक्तुं शक्यम्, किन्तु व्यञ्जकताधिया कपालिपदस्यैव मनोहारित्वं प्रकाशत इति तस्यैव प्रयोगः कालिदासेन कृत इति सहृदयहृदयसंवेद्यम् ।

कुत्रचित् कवे रीतिरेव पाठस्य स्वरूपं प्रकटीकरोति । यथा कालिदासस्य रघुवंशे (४/२९) श्लोक उपलभ्यते—

रजोभिः स्यन्दनोद्धूतर्गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥

'रजोभिः स्यन्दनोद्धूतैः' इत्यस्य स्थाने 'रजोभिस्तुरगोत्कीर्णैः' इति पाठान्तरमुपलभ्यते, किन्त्वेदाचार्यैः प्रामाणिकं न मन्यते । मया 'रजोभिस्तुरगोत्कीर्णैः' इत्येव पाठः प्रामाणिको मन्यते । भोजराजेनोक्तः श्लोकः सरस्वतीकण्ठाभरणे उदाहृतः । तत्र तेन 'रजोभिस्तुरगोत्कीर्णैः' इत्येव पाठः स्वीकृतः । रघुवंशस्य प्रथमसर्गे (४२)—

'पवनस्यानुकूलत्वात् प्रार्थनासिद्धिशंसिनः ।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥'

इति श्लोकः प्राप्यते ।

कालिदासेन बहुत्र तुरगोत्क्षिप्तरेणूनामुल्लेखः कृतः । तत्र सन्त्येवं श्लोकाः—

(१) ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ —रघु० ४/४६

(२) उत्थापितः संयति रेणुरश्वैः सान्द्रीकृतः स्यन्दनवंशचक्रैः ।
—रघु० ७/३९

(३) गगनमश्वखुरोद्धतरेणुभिर्नृसविता सवितानमिवाकरोत् ।
—रघु० ९/५०

(४) तस्य द्विपानां मदवारिसेकात्
खुराभिघाताच्च तुरङ्गमाणाम् ।
रेणुः प्रपेदे पथि पङ्कभावं
पङ्कोऽपि रेणुत्वमियाय नेतुः ॥
—रघु० १६/३०

(५) 'तुरगखुरहतस्तथाहि रेणुः' —अभिज्ञानशाकुन्तलम् १/२८

एवं कालिदासरीतिमनुसृत्य 'रजोभिस्तुरगोत्कीर्णैः' इत्येव पाठः स्वीकर्तव्यः । कवीनां कृतिषु बहुत्र संवादा भवन्ति ।

अत्र सामान्यरूपेण पाठालोचनसिद्धान्तविषये किञ्चिदुक्तम् । विविध-शास्त्रनदीष्णः सम्पादक एव ग्रन्थस्य समीचीनं स्वरूपं प्रस्तोतुं समर्थो भवति ।

—०—

**डॉ० महाराजदीन पाण्डेयः**
बभनान, गोण्डा

कविताद्वयी

१

## कृकलासो रंगमेति नवनवम्

कृकलासो रंगमेति नवनवं क्षणे-क्षणे ।
शलभो भवेत्कथन्नु सफल आत्मरक्षणे ॥

स प्रेर्यते नभसि विलोकितुं न वेद्मि किं ।
विश्वस्य यत्कृतेऽस्ति दैवतं कणे-कणे ॥

तत्त्वं यदस्ति तत्तु गुहायां निगूहितम् ।
अन्विष्यतेऽद्य किन्नु मिथः कूर्चकर्षणे ॥

आसीन् मनसि सुरो परं विनिर्मितोऽसुरः ।
काऽभूदसरावधानता नु ग्रावतक्षणे ॥

[1]आयुष्यदिनचतुष्टयं लब्धं यदिहविधेः ।
द्वे तेष्वितेऽर्थने तथा द्वे च प्रतीक्षणे ॥

---

१. उम्रेदराज़ माँग के लाये थे चार दिन ।
दो आरज़ू में कट गये दो इन्तज़ार में ॥
---बहादुरशाह 'ज़फर'

२

# वैदुषीनीतिः

आम्, कथावर्जयति न संशीतिः ।
ततोऽधिकं परं कथारीतिः ॥

रोचते कवलसिद्धिसंलापः ।
सम्मुखे तस्य न गीताऽधीतिः ॥

कञ्चुकच्छेदनस्य का चिन्ता ।
स्वीकृता यदि नखानखिप्रीतिः ॥

लेहनं तर्जनं यथावसरं ।
नो शुनः वैदुषी त्वियं नीतिः ॥

ह्यो मया मद्यनिषेधो घुष्टः ।
प्रसीद चाद्य निर्मिता पीतिः ॥

—०—

लघुकथा

**डॉ० विजयलक्ष्मी त्रिवेदी**
कानपुर

# गार्हस्थ्यघटः आनन्दविन्दुद्वयी च

लघूनि सन्ति वृत्तानि, किन्तु जलविन्दुनिपातेन यथा क्रमशो घटः पूर्यते तथैवैते वृत्तान्ता मम गार्हस्थ्यघटं पूरयितुं क्षमाः।

विशदं कथयामि। चलन्तु आर्यमिश्राः मया सार्धं दशकैकं पूर्वं ममोद्वाह-प्रसङ्गे। वरयात्रा द्वारे प्राप्ता आसीत्, एकैकाः आगत्य सख्यः कर्णकुहरे कथितवत्यः 'श्यामोऽस्ति ते वरः'। मनस्यचिन्तयमहम्—'श्यामो नाम रामः, श्यामः खलु श्यामः, वरोऽपि मे श्यामः; शुभं लक्षणम्। श्वशुरालयमागत्य कौमारे यः शिव आराध्योऽभूत् स एव मन्ये पतिरूपे परिणतः, अतः विस्मृत एव। रजन्यस्तु रजन्यः दिनान्यपि तन्द्रिलान्यभवन्। मोहस्याऽयमेव परिणामः। मासो व्यपगतः, न ज्ञातं मया कथम्। न जनको न जननी, न भ्राता न भगिनी, न सख्यो नैव पुस्तकानि आसन् ये संविदि आसन् केवलं श्वशुरः, श्वश्रूः, ज्येष्ठः, देवरः, ननान्दुः, ज्येष्ठानी च। एतेषामेव कृते जागरणम्, एतेषामेव कृते शयनम्,—एवं पतिगृहपरायणा भूत्वा अचिन्तय-महम्—'स्त्री-जीवनमारभते पतिगृहे समाप्नोति च पतिगृहे'। अथापरेद्युर् मदीयो भ्राता आगतः श्वश्रूं न्यवेदयच्च भगिनीम् आनेतुमागतोऽस्मि मातः! कृपया ताम् मया सह प्रस्थातुम् अनुमन्येदत्रभवती।

श्रुत्वा श्वश्रूः गम्भीरमुखमुद्रया अभिप्रायं पूर्वं पश्चाच्च वचनानि व्याजहार—'आम्। गमनस्य उपक्रमः क्रियते किन्तु समयपूर्वकम्। समयोऽस्ति 'द्विरागमनपूर्वं पञ्चसहस्ररूप्यकाणि आनेतव्यानि'इति अन्यथा भगिनी तव

गृहस्यैव शोभा भवेत्'। 'श्रुतम्, अवधारितम् किमपि, अथवा एवमेव तूष्णीं तिष्ठन्ती, संकटापन्नाम् आत्मानं करिष्यसि'— ज्येष्ठानी आगत्य वृत्तम् अनुमोदितवती। ननान्दुरपि स्वरम् अमेलयत् । देवरो ज्येष्ठश्च मातुः सुपुत्रौ जातौ, चक्षुषी विनमय्य माम् उपेक्षितवन्तौ । श्वशुरमहोदयेन मौनव्रतम् साधितम्। वराको मे भ्राता वराकी चाहं परस्परं निस्सहायं पश्यन्त्यौ अतिष्ठाव। श्वश्रूः आग्नेयास्त्रम् नयनाभ्यां प्रक्षिपन्ती मामवोचत् 'अत्र किं विचारयसि, पितृगृहे गत्वा ममोदन्तं प्रापयित्वा स्वकल्याणाय प्रयतस्व अन्यथा त्वम् जानीथाः तव पितरौ वा।' अन्ये सर्वे अपरिचिता इव व्यवहरन्तः मातुः शुश्रूषायां संलग्ना जाताः।

गगनाद् धरण्यां पातितेवाहं विमूढा अभवम् । आभूषणमञ्जूषा या तस्या समीपे आसीत् न याचिता मया । साऽपि तां स्वस्वं जानन्ती अगोपयत्। दिनं यावत् यात्रायां क्लान्तो मदीयो भ्राता अमुं वाक्प्रहारं प्राप्य मूर्च्छित इव अशनायापिपासेऽपि विस्मारितवान् । मामवदत् 'चल भगिनि, सुदूरं चल स्वनगरे मातृगृहे' इति। चक्षुषी परिमृज्याहं न्यवेदयम् 'प्रतीक्षस्व भ्रातः! यावद् आर्यः (मम पतिः) आयाति ।' भवता तस्य पाण्योः मे पाणी प्रदत्तौ, नैतेषाम् ।

भ्राता न विश्वसितम्, 'कृष्णसर्पाणां सन्ततिरपि कृष्णैव सम्भवति' इत्येतानि वचनानि मनस्युदाहृत्याऽकथयत्---'भगिनि ! अलं दुराशया, खिलीभूताः सर्वे स्वप्नाः। चरितार्थतां गता समाचारपत्राणां वार्ता 'यौतुकस्य बलिवेद्यै नवविवाहिता समर्पिता' चल शीघ्रं, अन्यथा मे श्वासरोधो भविष्यति, भगिनि ! न प्रवहन्ति वाता अत्र।'

किन्तु मे चित्ते पत्युर् विश्वासाञ्चिते स्नेहरञ्जिते नयने स्थिरीभूय ससान्त्वनाभावं नृत्यत इव । महानसे गत्वाऽहं रात्रिभोजम् अपचम्। श्वशुरज्येष्ठदेवरैः सार्धं स्वभ्रातारमभोजयम् । पश्चात् श्वश्रूं ज्येष्ठानीं ननान्दुञ्चाहूय भोजनं प्रापयम्, तर्जयन्त्य इव ता भुक्तवत्यः।

रात्रौ एकादशवादने ममार्यपुत्र आगतः, अपरस्मिन् नगरे नित्यं रेलयानेन गतागतं कुर्वन् क्लान्तो भवति । आगत्य यथावश्यकं कृत्वा द्वादशवादने मया सह उपभुज्य शय्यामभजत्। इयद्वेलं मया कोऽपि उदन्तः नोद्धृतः। सम्प्रति किन्तु अधरौ सम्पुटीभूय नयनयोरश्रुस्वरैः प्रावोचताम्। बाहूपधाने मुखरतया सर्वं व्याजह्लुः मेघगम्भीरेण स्वरेण आर्यपुत्रेण पृष्टम्

किम् अभवत् ? राधे ! किमिदम् ? त्वम् रोदिषि । मया किमपि नोक्तम् । अविरलाश्रुधारया सर्वं न्यवेदि श्वश्रोः संवादा मया केवलमुदाहृताः, भ्रातुर् नैराश्यमपि । आम् इति गम्भीरस्वरेण उच्चार्य स मामवदत् अधुना स्वपिहि, प्रातः उत्थाय पितृभ्यां सह निर्णयं करिष्ये ।

अहं गहनं निश्वस्य आश्वस्ता इव अन्वभवम् । प्रातः अर्थात् सूर्योदयः, गता तमिस्रा, आगतः प्रभातः इति । तथैवाभवत् । आर्यपुत्रः पित्रोः कक्षे प्राप्तः, आसनं गृहीत्वा न्यवेदयत्—भवत्योः वध्वा सार्द्धं मयाऽपि गन्तव्यमस्ति, सप्ताहान्तं तत्र उषित्वा एनामपि सेवानगरे नेष्यामि, यथा नित्यं गतागतं कुर्वन् उद्विग्नोऽस्मि सञ्जातः, गार्हस्थ्यं तत्रैव रचयिष्यामि । भवत्योः सेवार्थं कुटुम्बमाज्ञाकारि वर्तत एव ।

श्रुत्वा श्वश्रूः नासापुटौ विस्फार्य उक्तवती—यथा ते रोचते पुत्र ! कौ आवां स्वः, के च तव भ्रातृभगिन्यः तव विषये किमपि निर्णेतुम् ? तव वधूः, तव च गार्हस्थ्यम् अवश्यमेव गम्यताम् ।

कपाटान्तरितायाः शृण्वन्त्या मे नयनाभ्यां जलस्य या विन्दुद्वयी निपतिता, सा व्यर्थं न गता, पतिताऽवश्यं किन्तु मम गार्हस्थ्यघटे, स्मारं स्मारं पुनः पुनः तथा पतति, यथा मे गार्हस्थ्यघटः क्रमशः पूर्यते, यथा मे तथैव सर्वेषाम् सर्वासाञ्च गार्हस्थ्यघटः आनन्दजलविन्दुभिः प्रपूर्येत ।

—०—

---

एवं लघु एकं वृत्तं श्रावितम्, पाठकेभ्यः रोचिष्यते चेद् अन्यानि वृत्तानि अजस्रामाध्यमेन कथयिष्यामि क्रमशः………… (लेखिका)

'स्वागतम्'…… —सम्पादकः

डॉ० उमारमण झा
जम्मूतवी

# श्रीनेहरूचारुचर्चा

१

श्रीगौरीतनयं गजेन्द्रवदनं लम्बोदरं शङ्करं
विघ्नेशं वरदायकञ्च कपिलं कार्येषु सिद्धिप्रदम् ।
भक्तानामभयङ्करं प्रतिपदं ज्ञानाकरं कीर्तिदं
श्रीविद्यादिविवर्धकं गणपतिं श्रीविघ्नराजं भजे ।।

२

श्रीकृष्णो यमुनानिकुञ्जरुचिरो लीलाप्रभुस्तारको
देवक्यास्तनुजः प्रसन्नवदनो नन्दस्य नन्दप्रदः ।
गोपीनां हृदयेषु गुप्तरसिको भक्तप्रियो माधवो
राधामञ्जुकपोललोलवदनः पायादपायाच्चिरम् ।।

३

मातर्भारति ! तिष्ठ सम्प्रति मयि प्रज्ञानरत्नप्रदे !
याचे सत्प्रतिभे ! तव प्रतिलवं सज्ज्ञानरश्मिं महः ।
व्युत्पत्ते ! चिरसाध्यप्राप्तिनिपुणे ! प्रोन्मीलय प्रौढतां
कस्याप्यद्य महात्मनः सुचरितं वक्तुं प्रवर्ते यतः ।।

४

आकाश्मीराद्भुवनविदितं कन्यकाक्षेत्रमेकं—
माकैलाशं विलसतितरां प्रान्तभूतं समस्तम् ।
एकं राष्ट्रं भरतरचितं भारतं सर्वपूज्यं
धन्यं पुण्यं विलसति महारत्नभूतं धरायाम् ॥

५

यत्राजाद-खुदी-पटेल-तिलकाः प्राणैर्यशो लेभिरे
गान्धी नूनमवातरच्च सहसा सत्यस्य मार्गे दृढः ।
यद्देशे सहसातिकम्पनकरो नेता सुभाषो महान्
तद्रत्नं भुवि भारतं बहुगुणं वन्दे च कीर्तिप्रदम् ॥

६

यत्राभूद्धरणीतले रणभटो "राणा" प्रतापोद्भटः
लक्ष्मीबाइसमाश्शतं रणप्रियाः वीराङ्गनाः सुस्त्रियः ।
पृथ्वीराजशिवादिभूमिपतयः शूलाः रिपूणां कृते
वन्दे तं भुवि दुर्लभं सुललितं वीरैस्सदा शोभितम् ॥

७

अस्यैव राष्ट्रस्य सुशोभितस्य
प्रान्ता विचित्रा विलसन्ति रम्याः ।
तीर्थानि पूतानि नगाश्च नद्यः
सद्यः प्रमोदाय वनानि यत्र ॥

८

अस्त्युत्तरस्यां दिशि नाकभूमिः
कश्मीरराज्यं प्रथितं धरायाम् ।
श्रीशारदाक्षेत्रमिति प्रसिद्धं
यत्राभवन्मम्मटलोल्लटाद्याः ॥

९

तत्रैव लेभे सुजनो जनिं स्वां
प्रख्यात—मोतीयुतलालवर्यः ।
वाक्कीलरूपेण जनप्रशस्तो
बभौ गुणज्ञो मतिमान् विशिष्टः ॥

१०

दानेन पुण्येन जपादिभिश्च
पापप्रणाशाय मतिं चकार ।
प्रयागराज्यं समवाप्य मोती–
लालो बभूवातिसुकर्मशीलः ॥

११

तीर्थस्थले पुण्यविचारचेता
निर्मापयामास गृहं सुरम्यम् ।
प्राप्तुञ्च पुत्रं सततं विखिन्नः
सन्तानहीनो नहि शान्तिमाप ॥

१२

कीर्त्या योऽस्ति महीतले सुविदितः सर्वत्र सम्मानितः
कार्याकार्यविचारशीलतनयो भाग्येन दानी पुनः ।
कर्त्तुं वंशसमुन्नतिं बहुविधां नक्तंदिवं चिन्तकः
आत्मा वै तनुजस्सदा तु नरकात् त्राता सुतो दुर्लभ. ॥

१३

सोढ्वा क्लेशचयं न यो विचलितः सन्न्यायमार्गात्क्वचित्
हर्त्तुं कष्टमहर्निशं प्रयतते प्राणैस्तु पित्रोस्तथा ।
ईर्ष्याद्वेषविगर्हणादिरहितो देशोन्नतौ चिन्तकः
आत्मा वै तनुजस्सदा तु नरकात् त्राता सुतो दुर्लभः ॥

१४

प्राप्यैवं न धनं न बन्धुसुजनं यानं सुखं वा क्वचित्
सम्मानं न कदापि प्राप्य सुमुखो दृष्टः क्वचिन्मानवः ।
यादृक्चन्द्रमुखं विलोक्य तनयं हृष्टं भवेन्मानसं
मन्ये धन्यतमा गृहस्थरमणी सत्पुत्रयुक्ता यदि ॥

१५

नो मित्रं न पिता न बान्धवजनो कान्ता न वा सोदरः
त्रातुं कोऽपि कदापि भूमिवलये शक्तः कथञ्चिद् भवेत् ।
पिण्डं दातुमहो स एव कथितः पित्रोर्गयायां पुनः
आत्मा वै तनुजः स्मृतस्तु नरकात्त्राता सुतो दुर्लभः ॥

१६

खिन्नोऽनपत्यो यतिवर्यमेकं
समाधियुक्तं शरणं प्रपेदे ।
सुनिश्चितं विज्ञवरेण नूनं
वृथा न साधोः भवति प्रसादः ॥

१७

उवाच योगी सुविचिन्त्य साधुः
पुत्रोऽतिमान्यो भविता गुणज्ञः ।
यं प्राप्य धन्या वसुधा हि नूनं
कुलञ्च ते यास्यति गौरवञ्च ॥

१८

निशम्य वाचं मधुरां तदानीं
तौ दम्पती तं प्रणिपत्य मूर्ध्ना ।
भूत्वा प्रसन्नो ययतुश्च गङ्गां
श्रद्धाभरेणाहृतुरित्थमेव ॥

१९

गङ्गे ! त्वमेवासि सदातिधन्या
मान्या स्थिता मूर्ध्नि सदाशिवस्य ।
कृपां विधायाशु सुपुत्रमेकं
मातः ! प्रसन्ना यदि चेन्नु देहि ॥

२०

चतुर्दशे नवम्बरे जवाहरो जनिं गतः
प्रयागराजतीर्थभूः बभौ परं मुदान्विता ।
स्वदेशरक्षको यदा जगज्जनार्तिनाशकः
समागतस्तदाऽभवन् सुखान्विता बुधा जनाः ॥

२१

सुतमसूत सुकोमलसुन्दरं
मधुरमूर्तिमहो नु गुणालयम् ।
तमवलोक्य रतीशसमं निजं
समभवज्जननी तु मुदान्विता ॥

२२

दुःख जवादाहरते परेषां
पित्रोस्तथा ऽ न्वर्थकनामधेयः ।
पश्चात्प्रजालालनतत्परोऽपि
बभूव लालोऽपि जवाहरोऽयम् ॥

२३

रत्नं शिशुं ननु जवाहरनामधेयं
प्राप्याथ मोदभरितो नवजातमेनम् ।
सिन्धुर्यथेन्दुमवलोक्य मुदं बिभर्ति
हृष्टो बभूव जनकोऽर्भकदर्शनेन ॥

२४

माता मुदा स्नेहनिबद्धचित्ता
तं पोषयन्ती भवति स्म मुग्धा ।
केनापि पुण्येन समागतोऽयम्
ऊचुर्जनाः दिव्यशिशुं विलोक्य ॥

२५

पश्चात्सुकन्या विजयाख्यलक्ष्मीः्
लेभे जनुः सोदरसौख्यादात्री ।
या राज्यपालादिपदेषु वीरा
कीर्त्या च बुद्ध्या समलञ्चकार ॥

२६

वाक्कीलरूपेण पिता यशस्वी
गृहे चकाराशु जवाहरस्य ।
शिक्षाव्यवस्थामुचितां सुतस्य
"लालस्य" रत्नस्य प्रियस्य प्रेम्णा ॥

२७

कुशाग्रबुद्धिस्तु जवाहरोऽयं
सम्प्राप्य विद्याश्च कला अनेकाः ।
पित्रोर्गुरूणाञ्च मुदं प्रतेने
नम्रः कुमारः कमनीयकायः ॥

२८

पाश्चात्यविद्या समवाप्तये तु
सम्प्रेषितो लण्डनदेशमेषः ।
वाक्कीलशास्त्रे समवाप्य पूर्ण—
मुपाधिमाश्चर्यकरं सुतीक्ष्णः ॥

२९

देशे विदेशे समवाप्य विद्याः
नानाकलाश्चापि सुतीक्ष्णबुद्धिः ।
विज्ञानशास्त्रेष्वपि सत्प्रवीणः
जवाहरोऽभून्नयविज्ञवर्यः ।।

३०

साफल्यं समवाप्य तीव्रमतिमान् विद्यापरीक्षाविधौ
विज्ञाने समुपाधिलब्धविबुधो नीतौ परं पण्डितः ।
विद्यावान् विनयी विचारचतुरः सत्कर्मनिष्ठः क्षिता-
वासीद्विज्ञजवाहरो मतिमतां श्रेष्ठश्च वन्द्यः सदा ।।

३१

पाश्चात्यदेशे मतिमान् सुधीरो
वैरिस्तरोपाधिमवाप्य लालः ।
अमेरिकादेश—दिदृक्षयासौ
मतं स्वकीयं प्रकटीचकार ।।

३२

प्राप्याथ पित्रोः स्वीकृतिं सुविज्ञः
अमेरिकादेशमसौ जगाम ।
दृष्ट्वातिरम्यं विभवैश्च पूर्णं
मेने नु नाकं भवने ध्रुवं तत् ।।

३३

जनेषु हर्षं सहसा प्रकर्षं
स्वदेशमागत्य मुदं ततान ।
पित्रोर्जननां वचसा च प्रेम्णा
कश्मीरकन्यां कमलामवाप ।।

३४

चकार पाणिग्रहणं बुधौऽसौ
पित्रोरनुज्ञां समवाप्य "ल.ल:"।
गृहस्य लक्ष्मी: कमला बभूव
लावण्यराशि: नितरां सुकन्या ॥

३५

प्राप्यापि लक्ष्मीं गृहणीं सुगात्रां
चित्तं न तस्यां रमते स्म तस्य।
स्वातन्त्र्यसंग्राममखे सुवीर:
श्रीनेहरू: जीवनमाऽऽजुहाव ॥

३६

वाक्कीलरूपेण जवाहरोऽसौ
विख्यातिमाप्तुं जनकस्य मार्गे।
कार्यं समारभ्य ददर्श देश—
माङ्गलाधिपाधीनमसह्यदु:खे ॥

३७

तदैव गान्धिप्रवरस्य वाचा
स्वातन्त्र्यसंग्राममखे प्रविष्ट:।
पत्न्यापि राष्ट्रस्य कृते प्रदत्तं
यथोचितं कर्मणि योगदानम् ॥

३८

अनेकधासौ समवाप्य कारा—
गृहं भृशं खिन्नमति: सुधीर:।
निशम्य वार्तां निधनस्य पत्न्या:
मर्माहतोऽभूत्सहसा विदीर्ण: ॥

३९

कांग्रेससंघस्य यथार्थनेता
बभौ विचारार्थमयं प्रधानः
आध्यक्ष्यमाप्य प्रथमो महात्मा
जवाहरो देशहितानुरक्तः।

४०

नित्यं कशाघातमवाप्य वीर—
स्तत्याज धैर्यं न तथापि धीरः।
सिंहादयः पञ्चरमाप्य नून—
मर्हनिशं क्लेशततिं भजन्ते ॥

४१

राष्ट्रस्य कार्येषु सदानुलग्नो
निष्कामकर्मस्वनुबद्धचेताः।
सुधामयीं देशहिताय प्रीतिं
प्रवाहयामास जनेषु वीरः ॥

४२

सन्ताडितोऽपि प्रखरैश्च दण्डैः
गौराङ्गदुःशासनकार्यकाले ।
धैर्यं न तत्याज तथापि वीरो
जनानुरागी सहते हि कष्टम् ॥

४३

स्वातन्त्र्यहेतोर्मनुजो गुणज्ञः
समत्यजत् स्वीयसमस्तसौख्यम् ।
महात्मनोऽसौ पदचिह्नमार्गा—
न्नैवाचलन्न्यायपथात्कदापि ॥

४४

यस्मिन् जन्मनि राष्ट्रचिन्तनरतिस्तज्जीवनं जीवनं
यस्मिन् जन्मनि लोकचिन्तनमतिस्तज्जीवनं जीवनम् ।
यस्मिन् जन्मनि शास्त्रचिन्तनधृतिस्तज्जीवनं जीवन-
मित्थं तस्य जवाहरस्य सततं घोषस्त्वभूत्कण्ठतः ।।

४५

बाल्ये शास्त्रमधीत्य येन सकलं पीतञ्च तत्त्वामृतं
कौमारे गुरुकार्यचिन्तनपरस्त्यक्त्वा स्वकीयं सुखम् ।
गार्हस्थ्ये निजराष्ट्रचिन्तनरतः सेवां सदा योऽकरोत्
येनेत्थं समनायि जीवनमहो धन्यः सदा "पण्डितः" ।।

४६

स्वार्थैकलक्ष्याः कपटाः खला ये
विद्रोहिणो भारतजन्मभूम्याः ।
निपात्य दुष्टान् दनुजान् कुशीलान्
प्रवर्धतां भारतराष्ट्रभाग्यम् ।।

४७

असून् स्वकीयान् तृणवच्च मत्वा
परोपकाराय त्यजन्ति यत्र ।
जागर्तु सा संस्कृतिरस्मदीया
प्रवर्धतां भारतराष्ट्रभाग्यम् ।।

४८

परस्परासूयविवृद्धिवैराः
क्षतिञ्च ये राष्ट्रधनस्य कृत्वा ।
दुष्टांश्च धिक् तान् दमनेन तेषां
प्रवर्धतां भारतराष्ट्रभाग्यम् ।।

४९

इत्थं यस्य जवाहरस्य सततं घोषस्त्वभूत्सर्वथा
देशस्यास्य समुन्नतौ खलु यथा लोका भवेयुर्दृढाः ।
आङ्ग्लानामतिदुर्नृणामिह पुनर्णाशः समूलं भवेत्
तं वन्दे धुरि कीर्तनीयमनुजं राष्ट्रस्य पुत्रं बुधम् ॥

५०

देशस्यास्य विभूषणं मतिमतां वृन्दैः सदा मण्डितः
सत्यासत्यविवेकशीलनपरो दीनार्थचिन्तारतः ।
लोकानां कुशलं सदैव कुरुते देशप्रियः पण्डितः
मान्यो भक्तजवाहरो बुधवरः सत्पात्रमासीत्सदा ॥

५१

न धर्मो न जातिर्न वा प्रान्तवादः
न गर्वो न कोपो न वा स्वार्थवादः ।
न कार्यः कदाप्यात्मदर्पो न रोषो
मिलित्वा समस्तैः सदा भारतीयैः ॥

५२

न निम्नो न हीनो न दीनो न कश्चि–
न्न कोऽप्यस्ति लोके कदाचित्तु तुच्छः ।
इयं देशनीतिः विधिश्चाप्ययं तु
समस्ताः प्रजातन्त्रराज्ये समानाः ॥

५३

भूयाद् भारतराष्ट्रमेकमखिलं सत्यस्य तेजो महः
वर्धन्ताञ्च सदा सतां मतिमतां लोकप्रियाः सत्क्रियाः ।
सर्वत्रैव महीतले विलसतु द्राक् विश्वशान्तिः शुभाः
इत्थं तस्य जवाहरस्य सुमतिः प्रोद्घोष आसीत्सदा ॥

५४

परस्परं प्रेमभरा नराः स्युः
लोकाः समस्ताः सुखिनो यथा स्युः ।
ज्ञानाग्निधौताः मनुजाः सुशीलाः
भूयात्सदा भारतदेश एषः ॥

५५

लोकानुरक्ताः कपटादिशून्याश्
चारित्र्यपूर्णाः परलोकचित्ताः ।
ते सन्तु द्राक् नेतृगणाः समस्ताः
भूयात्सदा भारतदेश एषः ॥

५६

सौन्दर्ये सुरुचिश्शुचिश्च वचने कार्ये च काये तथा
यस्यासीत्सरला च वाड् मधुमयी यो लोकपूज्यस्सदा ।
नानाग्रन्थनिबन्धलेखनपटुर्वक्ता विपश्चिद्वरः
मान्यो दिव्यजवाहरो नरवरो धन्यः स आसीत्सदा ॥

५७

दुष्टान्तकः परमसूक्ष्मविचारदक्षः
गौराङ्गलोकमथने च सदैकलक्ष्यः ।
सन्तापशोकहरणे निजराष्ट्रपक्षः
दक्षो जवाहरवरो रिपुसर्पतक्षः ॥

५८

चित्तं न येषां रमते स्म वित्ते
स्वार्थे कदाचिन्न च भोगसौख्ये ।
लावण्यपूर्णां ललनां विहाय
ते द्राङ्महान्तः सुतरां जयन्ति ॥

५९

येषां विशिष्टमहतां गुणकीर्तनेन
वाचो भवन्ति परिपूततमाः कवीनाम् ।
पुण्याश्च ते त्ववतरन्ति तपोभिरत्र
धन्याः स्मृता नरवराः सुधियो महान्तः ॥

६०

देशे स्वकीये परकीयभावं
सम्प्राप्य कष्टं नितरां सहन्ते ।
बाला युवानः शिशवश्च वृद्धाः
दारिद्र्यपीडाः सततं सहन्ते ॥

६१

कौलेयकाः स्वमुदरं परिपूरयन्ति
काका बलिं प्रतिदिनं नहि किं लभन्ते ।
धिग्जीवनं भुवि जनस्य निजोदरार्थं
धन्या हि भान्ति मनुजाः परकार्यचित्ताः ॥

६२

उन्मूलनं सपदि येन तु मातृभूमेः
स्वार्थं विहाय मनुजेन परार्थभावैः ।
प्राणव्ययेन खलु येन परोपकारो
धन्योऽस्ति पूज्यमनुजो भुवि कीर्तनीयः ॥

६३

सूर्यो यथा नैशतमोवितानं
क्षिप्रं विनाशयति भास्वररश्मिपुञ्जैः ।
भाग्यात्तथैव च जवाहरलालवीरो
हर्तुं जनार्तिनिचयं स बभौ जगत्याम् ॥

६४

राष्ट्रस्य वित्तं परिहृत्य दुष्टै—
गौराङ्गधूर्तैरतिनिन्दनीयैः ।
सन्ताड्यते साधुजनोऽपि नित्यं
प्रतार्यते चापि धनादिलोभैः ॥

६५

नित्यं जनाः प्राप्य विशेषपीडा
विन्दन्ति दासा इव कष्टपुञ्जम् ।
चेखिद्यते हा व्यथितञ्च चित्तं
दृष्ट्वा दशां भारतदेश एव ॥

६६

आन्दोलनं भारतमुक्तिनाम
बभूव राष्ट्रे विपुलं विचित्रम् ।
कशाभिघातैः बहुताडितोऽपि
कारागृहं प्राप जवाहरोऽसौ ॥

६७

देशः स्वतन्त्रो जनताप्रयासैर्
यातश्च गौराङ्गजनोऽपि भीतिम् ।
दृष्ट्वा न मार्गं भयविह्वलास्ते
स्वकीयदेशं शरणं प्रजग्मुः ॥

६८

जनाः प्रकर्षं सहसा प्रहर्ष—
मापुः स्वतन्त्रे भरतस्य देशे ।
गताः यथा गौरजना इतस्ते
हर्षान्विताः मोदयुता बभूवुः ॥

६९

अभूदसो भारतराष्ट्रमन्त्री
प्रधानमन्त्री प्रथमश्च वीरः ।
चकार देशस्य हिताय कार्या-
ण्यन्यानि युक्तानि विचिन्त्य "लालः" ।

७०

प्रधानमन्त्री भुवि लोकविश्रुतो
गुरुत्वमाप्तः खलु शान्तिसिद्धये ।
स्वाधीननीतौ कुशलो जवाहरो
जेगीयतेऽद्यापि सुधीः धरातले ॥

७१

आजन्मतो देशसमाजहेतो-
रुत्थानकार्ये खलु दीनबन्धुः ।
क्रान्तेः प्रचारेऽपि सदातिलीनः
आंग्लाधिपानां भयमेव तेने ॥

७२

आन्दोलनं येन भृशं व्यधायि
देशे तदानीं सह गान्धिनात्र ।
प्रशासका रुष्टिमिता गताश्च
क्रान्तिं सुदीप्तां सहसा निरीक्ष्य ॥

७३

यथा सुमेरुः विदितो नगानां
कांग्रेसिनां मध्यगतो गरिष्ठः ।
सभापटिष्ठः सुधियां वरिष्ठः
जवाहरोऽसौ विदुषां विशिष्टः ॥

७४

स्वातन्त्र्यसिद्धौ धनधान्यवृद्धौ
देशैक्यलाभाय कटिप्रबद्धः ।
अनेकवारं समवाप्य कारां
तेने भयं शत्रुदले प्रवीरः ॥

७५

स्वदेशसेवाव्रतरक्तचेताः
वव्रे सदा कण्टकमार्गमेव ।
कांग्रेसनीतौ दृढकर्मभावै-
रैच्छत्स्वदेशस्य सदा समृद्धिम् ॥

७६

स्वराज्यमस्मत्सहजाधिकारो
जगर्ज सर्वत्र जवाहरोऽयम् ।
बन्दीकृतोऽसौ न जहौ स्वधैर्यं
कार्यं च कर्तुं निजदेशभक्तः ॥

७७

बालप्रियो बालविनोदकार्या-
ण्यनेकधाऽसौ कृतवान् महान्ति ।
अद्यापि तज्जन्मदिनं प्रशस्तं
हर्षप्रदं "बालदिनं" स्वदेशे ॥

७८

स्वराष्ट्रबन्धुर्निजदेशभक्तो
न्यायप्रियो नीतिविचारविज्ञः ।
अनेकधा लोकहितं विधाय
स राजनीतौ गरिमाणमाप ॥

७९

आंग्लेयानां महति दमने क्रान्तियज्ञस्य नेता
सत्याहिंसारत इह सदाऽखण्डयद्बन्धनानि ।
कर्तुं देशं रिपुकरतलात्सर्वथा यः स्वतन्त्रं
तेने लोके त्वभयवचनं कण्टकाकीर्णमार्गे ॥

८०

तस्य स्वदेशोन्नतितत्परस्य
सत्त्यागमूर्तेस्तपसा च कीर्त्या ।
समस्तभूमण्डलमध्य एव
विद्योतते भारतवर्षमद्य ॥

८१

अस्यैव विज्ञस्य जवाहरस्य
कृतैः विचारैश्च तु सत्प्रयासैः ।
विशेष्वपूर्व सुखमाकिरच्च
सत्पञ्चशीलं प्रथितं धरायाम् ॥

८२

देशेन केनापि परं सुराष्ट्रं
सम्मानतो वर्तयितुं यतेत ।
शीलं सुशान्त्यै च जगद्धिताय
निर्णीतमेवं प्रथमं सुशीलम् ।

८३

न कोऽपि कस्यापि तु शासनस्य
सिद्धान्तभेदेष्वपि सत्सु नीतौ ।
क्षिपेन्न हस्तं परराष्ट्रनीतौ
शीलं द्वितीयं विदितं बभूव ॥

८४

मिथः समे स्नेहभराश्च देशाः
हिंसाप्रवृत्तौ न कदापि लिप्ताः ।
तार्तीयकं शीलमिदं प्रशस्तं
सुनिश्चितं विज्ञजनैर्विचिन्त्य ॥

८५

परस्परं प्रेमविवृद्धये तु
राष्ट्रेषु सर्वेषु समत्वमाप्तुम् ।
शीलं चतुर्थं सह जीवनञ्च
सुशान्तिपूर्णं खलु पञ्चमञ्च ॥

८६

विश्वस्य सर्वे प्रवदन्ति विज्ञा
युक्तञ्च लाभप्रदपञ्चशीलम् ।
शीलं सुशीलं न कदापि दुष्ट–
मित्थं विचारस्तु जवाहरस्य ॥

८७

अनेकविद्यासु विवृद्धिहेतोः
शिक्षालयाः लोकहिताय युक्त्या ।
विनिर्मिता येन सुधीवरेण
मृतोऽपि वन्द्योऽस्ति जवाहरोऽसौ ॥

८८

अद्यापि कीर्तिं व्रतिनो मनीषिणो
यशांसि भूमण्डलदीप्तिमागमन् ।
सदाऽस्य सेवापरतन्त्रतापहा
जेगीयतेऽद्यापि स्वतन्त्रभारते ॥

८९

ग्रन्थाननेकान् स विलिख्य लोके
लब्धप्रतिष्ठो विदुषां समाजे ।
"डिस्कावरी-भारतदेशनाम"
सत्पुस्तकं विज्ञवरो लिलेख ॥

९०

विद्यावैभवभूषितो बुधवरो विज्ञः सदा "पण्डितो"
लोका चारविचारचारुचतुरो भास्वत्प्रतापावलिः ।
नानादेशविदेशसंगतिविधौ चातुर्यमासादयन्
सन्मान्योऽस्ति जवाहरो भुवि सदा प्राप्यापि स्वर्गं बुधः ॥

९१

वाचा कोमलया सुधामधुरया सम्बोधयन् स्वाः प्रजाः
लोकानामनुरञ्जने दृढमतिः कारुण्यरत्नाकरः ।
सत्कीर्त्यावनिमण्डले गुणिगणे ख्यातिञ्च विस्तारयन्
धन्योऽसौ हि जवाहरो द्विजवरस्त्वासीत् सतामग्रणीः ॥

९२

सन्मान्यैरभिनन्दितो बुधवरो रूपैश्च शोभान्वितः
विद्यावान् विनयी नितान्तसरलः काये भृशं कान्तिमान् ॥
प्राचीनाखिलनीतिशास्त्रनिपुणो नेता जनानां प्रियः
एकोऽभूत्स जवाहरो मणिसमो नान्यो द्वितीयः पुमान् ॥

९३

विद्याभूतिगुणैर्यशोभिरमलैः संशोभते सर्वदा
विद्वन्मानससारसालिमधुपो विज्ञानविज्ञो बुधः ।
प्रोद्यद्गर्वसमस्तशास्त्रवकुलं सम्मीलयन् तेजसाऽऽ-
सीन्मान्यः स जवाहरो मतिमतां श्रेष्ठः सदा सर्वदा ॥

६४

आङ्गलेयानां दमनसमये राष्ट्रमेकं त्वखण्डं
दृष्ट्वा दुष्टा अधमचरिताश्चक्रुरित्थं प्रयासम् ।
पाकिस्तानं भरतभुवनात्खण्डमेकं विधाय
नानाक्लेशैरिह खलु यथा स्युः जनाः क्लान्तचित्ताः ॥

६५

अभूदार्त्ताक्रोशो विविधजनशोकः करुणया
हताः पुत्राः कैश्चित्क्वचिदपि हता हन्त पतयः ।
पिता भ्राता बन्धुः सुहृदपि हताः कैश्चिदपरैः
जनानामाक्रन्दः समभवदकालेऽतिप्रलयः ॥

६६

इत्थं भारतदेश एव विपुले कष्टे यदा पातितः
नेतायं कटिबद्धभावभरितः शान्त्यै प्रयासं मुहुः ।
लोकार्थं हितमाचरन् स बहुधा तेने यशः सर्वथा
साधूनां हि भवन्ति भूतिविभवाः लोके परार्थं सदा ॥

६७

हा हा हतो हन्त महा मनस्वी
गान्धीमहात्मा सहसा स्वदेशे ।
स्वराष्ट्रचिन्ता महती बभूव
जवाहरस्याथ विपत्तिसिन्धौ ॥

६८

भारतरत्नमसौ बभूव जनतामध्ये सुपूज्यस्सदा
राजेन्द्रस्य सखा विशिष्टसचिवः सन्नीतिसञ्चालकः ।
नानाक्लेशमवाप्य देशजनतानेता परार्थं रतः
आसीद्धन्यजवाहरो बुधवरो मान्यश्च पूज्यो नरः ॥

९९

प्राप्यापि गौरवपदं न चकार गर्वं
साम्राज्यशक्तिवलितोऽपि न दम्भमागात् ।
खिन्नः सदा निजजनार्थमसौ सुवीरो
दिवंगतो बुधवराः सहसा "प्रधानः" ॥

१००

अभूद्वज्राघातः परमकुलिशः कष्टजनकः
दिशाः शून्या जाता गतसुखजनाः क्लैशवलिताः ।
जना आर्ताक्रोशं भरतभुवि चक्रुः करुणया
अहो मुख्योऽमात्यो भुवनविदितः स्वर्गमगमत् ॥

१०१

विज्ञो गान्धिमतानुगोऽतिनिपुणः सत्कर्मनिष्ठस्सदा
ख्यातोऽद्यापि जवाहरो जनप्रियो देशार्थचिन्तारतः ।
राष्ट्रस्यास्य सुधारकार्यरसिको लोकानुरक्तो बुधः
श्रीमद्राष्ट्रपतेरमात्यप्रमुखः सन्मन्त्रिमुख्यः क्षमः ॥

१०२

नीत्या देशहितं विचिन्त्य बहुधा सोढ्वा च दुःखं मुहुः
कारागारमनेकधाप्य विपुलं क्लेशञ्च शोकन्तथा ।
आंग्लेयैः सह भूरि युद्धमतनोत् सत्यस्य मार्गे दृढः
पायाद्राष्ट्रमिदं प्रसन्नमनसा देशस्य "लालः" सदा ॥

१०३

राष्ट्रैः रुसादिमुख्यैः सुदृढमभिनवं सख्यभावं व्यनैषीत्
शान्त्यर्थं खिन्नचेताः नयजयकुशलः पञ्चशीलप्रणेता ।
कीर्त्या लोके प्रसिद्धः स्वमतिततिबलैः विश्ववन्द्योऽति धन्यो
मुख्यो देशस्य मन्त्री त्रिभुवनविदितो नेहरूः शान्तिदूतः ॥

१०४

मान्यो लोकहिताय पूज्यमतिमान् स्वातन्त्र्यसमबर्द्धकः
पारीणः परराष्ट्रनीतिजलधेः संवित्प्लवेनैव यः ।
देशस्यान्यविचक्षणोऽतिनिपुणोऽमात्यो महापण्डितः
विज्ञो धैर्यवपुस्त्वसौ गुणनिधिः श्रीनेहरू मन्त्रवित् ।।

१०५

लोकामोदी कमलवदनो दिव्यकायो धरायां
दीव्यत्कीर्त्या मतिललितया ख्यातिलब्धः सुनेत्रः ।
तेजो धामा महितमहिमा लोकवन्द्यो विवेकी
धन्यः पूज्यो भुवनविदितो मन्त्रिमुख्यो व्यराजत ।।

१०६

सदा सत्याहिंसाव्रतरतजनो नोदनकरो
विजिष्णुः सन्नेता दलितजनबन्धुः करुणया ।
महामान्यो धीरो विविधनयविज्ञानकुशलः
सदासील्लालोऽसौ प्रथितनेहरू राष्ट्रतनयः ।।

१०७

हिन्दूमुस्लिमसिक्खवृन्दवलितश्चक्रे स्वतन्त्रं निजं
राष्ट्रं दुष्टप्रशासनाद् बहुविधं सोढ्वा च कष्टं महत् ।
आंग्लानामखिलं प्रयासमतुलं निन्ये क्षयं मूलतो
मान्यो लालजवाहरो जनप्रियः श्रीनेहरूः विश्रुतः ।।

१०८

राष्ट्राणां भुवि मित्रताप्तिचयने साफल्यमासादयन्
मान्यः सौम्यमनाः महागुणनिधिर्लोकोपकारे रतः ।
ख्यातः मन्त्रिमुखो महामतियुतः श्रीनेहरूः पण्डितः
आसीद्दिव्यचरित्रचित्रितगुणः सन्नीतिरत्नाकरः ।।

१०९

तस्येन्दिरासीत्तनया सुगात्री
धात्री स्वदेशस्य प्रधाननेत्री ।
दुःखान्धलोकस्य प्रकाशकर्त्री
आर्तप्रजानां बहुतापहर्त्री ॥

११०

आसामे या परमजटिला क्लेशपूर्णा समस्या
पाञ्चाले या त्वजनि सहसा क्रान्तिरेका विशेषा ।
काश्मीरे या सततजटिलाऽऽसीत्समस्या विशाला
तामुद्धर्तुं प्रतिदिनमहो सत्प्रयत्ना सदाऽसीत् ॥

१११

मोतीलालस्य पौत्री विविधगुणवती मुख्यनेत्री विधात्री
राष्ट्रस्यार्थं सदा या जनहितकरणे त्यक्तप्राणा प्रधाना ।
याऽऽसील्लोकार्थसिद्धये भरतभुवि रता चिन्तने चाति दक्षा
सा राष्ट्रस्यास्य माता शिशुजनविमुखी हा गताकुत्र चाद्य ॥

११२

दौहित्र एको मतिमान् गुणज्ञो
राजीवगान्धी सततं विलोक्य ।
खिन्नोऽतिदीनार्तजनस्य दुःख–
मर्हर्निशं यः कुरुते प्रयासम् ॥

११३

स्वस्थः सुवक्त्रश्च सुनेत्रकर्णो
वर्णोऽपि स्वच्छः सुजनो विशिष्टः ।
प्रधानमन्त्री सुविचारदक्षो
देशैक्यलक्ष्यो धनहीनपक्षः ॥

११४

भुंक्ते न भोगं कुरुते न सौख्यं
देशस्य चिन्तां हृदये निधाय ।
अहर्निशं भारतराष्ट्रमेकं
कर्त्तुं प्रयत्नं यतते सुवीरः ।।

११५

दृष्ट्वापि मातुर्निधनं विचित्रं
देशस्य घोरान्धदशां विलोक्य ।
तत्याज धैर्यं न तथापि वीरो
धीरो हि धत्ते नु धृतिं विपत्तौ ।।

११६

कांग्रेसनेता सततं विजेता
जेता स्वदेशस्य गुणैर्नराणाम् ।
प्राणव्ययेनापि जनस्य रक्षां
कर्त्तुं व्यथा नास्ति कदापि चित्ते ।।

११७

राजीव—गान्धी जनता—हितार्थं
स्वार्थं परित्यज्य परोपकारम् ।
देशोपकारं कुरुते मनस्वी
परार्थमेवास्ति सतां विभूतिः ।।

११८

जवाहराय विज्ञाय पण्डिताय गुणात्मने ।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा ।।

११९

वैशाखे विधुवासरे शुभदिने शुक्ले नवम्यां तिथौ
ख्रीस्ताब्दे निधि-सिद्धि-रत्न-वसुधायुक्ते शताब्दे शुभे ।
ग्रन्थोऽयं खलु नेहरूसुचरितं यत्नान्मया कारियत्
प्रीयन्तां सुधियोऽनया मधुरया श्रीनेहरूचर्चया ।।

—०—

**डॉ० चन्द्रभानु त्रिपाठी**
इलाहाबाद

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तञ्च जीवनम् ॥

[१]

सर्वे क्षयान्ता निचयाः

सुखदविश्वमेतत्सदा संस्मरामि
विनशत्यहो तत्किमिति विस्मरामि ।
शिशुः शोभतेऽयं किशोरोऽस्ति कान्तः
युवा सैष भाति प्रभापूरितान्तः ॥

सुविद्याऽनवद्या न केनापि हार्या
पदप्राप्तिरर्थाप्तिरार्या न भार्या ।
यदा स प्रवृद्धो जराजीर्णदेहः
धनं नापि नारी न पुत्रो न गेहः ॥

समस्तोऽपि निचयो नितान्तं क्षयान्तः
कदाचिद् विधातैव हर्ता कृतान्तः ।
अमन्दं सदानन्दनं प्रार्थयामि
निरानन्दमेतत् किमिति सन्त्यजामि ॥
सुखदविश्वमेतत् सदा संस्मरामि ।

## [२]

### पतनान्ताः समुच्छ्रयाः

ललाटन्तपः खे तपत्यातपांशुः
सुधावारिवर्षी च राकासुधांशुः ।
शिखी प्रोज्ज्वलन् प्रोच्छिखोऽयं प्रवृद्धः
सरिद्वारिपूरप्लवश्च प्रसिद्धः ।

महत्त्वस्य सर्वोऽपि शिखरं प्रयाति
पतनमुन्नतोऽन्ते परं हन्त याति ।
अयं सर्वमान्योऽस्ति नियमः प्रभावी
यदीयोन्नतिस्तस्य पातोऽपि भावी ॥

सकलमुन्नतं वीक्ष्य सुखमनुभवामि
पतन्तं समालोक्य वा दुःखयामि ॥
सुखदविश्वमेतत्.......................................

## [३]

### संयोगा विप्रयोगान्ताः

वराकः शिशुः मातुरङ्के शयालुः
पिता पाति गुरुरस्ति तस्मिन् कृपालुः ।
प्रिया बान्धवाः प्रियतरास्ते सतीर्थ्याः
तथा प्रियतमा भ्रातरश्चानुकीर्त्याः ॥

ततः सहचरी तस्य रामाऽभिरामा
सुपुत्रेण जातः स सम्पूर्णकामः ।
अयं सर्वसंयोग इष्टो विशिष्टः
परं हन्त जातो वियोगेन नष्टः ॥

सुसंयुक्तमानी सुखी किं भवामि
वियुक्तो विरक्तोऽथ वनमाश्रयामि ॥
सुखदविश्वमेतत् ..............................

[४]

पितुः प्रीतिपात्रं प्रियासङ्ग्रहान्त
कियत्सुन्दरं जीवनं यौवनान्तम् ।
सखीनां समाजाय सौख्यप्रदानि
क्षणानीव यातानि सुदिनानि तानि ॥

सुजातेषु येषु प्रहर्षप्रकर्षः
अहो दैव ! तेषु प्रणाशप्रवर्षः ।
मता ये प्रियाः स्वस्य हेतोः स्वकीयाः
मृतास्ते गता दूरमनिवर्तनीयाः ॥

चिरं जीवनं मे किमिति भावयामि
भवेन्मृत्युरद्यैव वा कल्पयामि ॥
सुखदविश्वमेतत् सदा संस्मरामि ।

—०—

डॉ० नन्दकुमार-मिश्रः
बाढ़ (पटना)

# कालिदासस्य कारुण्ययोजना

क्रान्तदर्शिकवेः नवनवोन्मेषशालिन्याः प्रतिभायाः निःसृतं काव्यमानन्द-स्वरूपम्। काव्यम् हि आनन्दानुभूतिसाधनम्। आनन्दानुभूतिश्च रसास्वादमूला। रसास्वादनादेव आनन्दप्राप्तिः। 'सद्यः परनिर्वृतये—' इत्यस्य व्याख्यायां मम्मटाचार्येण प्रपञ्चितं 'सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादन-समुद्भूतं विगलितवेद्यान्तरमानन्दम्।' आचार्यविश्वनाथेनापि साहित्यदर्पणे कथितम्—

वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥

तैत्तिरीयोपनिषदि—'रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति'—इत्युक्तम्।

किं नाम रसः? रस्यते आस्वाद्यते इति रसः। कथमास्वाद्यते रसः? यथा नानाव्यञ्जनमिश्रमन्नं भुञ्जाना रसान् आस्वादयन्ति तथैव नानाभावा-भिव्यञ्जितान् स्थायिभावान् सहृदया आस्वादयन्ति हर्षं चानुभवन्ति। अस्य महत्त्वं प्रतिपादयता नाट्याचार्येण भरतेनोक्तम्—'नहि रसाद् ऋते कश्चिदर्थः प्रवर्तते।' कथं रसनिष्पत्तिः जायते? तेनैवोक्तम्—'विभावानुभावव्यभिचारि-संयोगाद्रसनिष्पत्तिः।' मम्मटाचार्येण विस्तरशः पारिभाषितम्—

कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥
विभावानुभावास्तत् कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः॥

भरतसूत्रे प्रयुक्तौ 'संयोग'-'निष्पत्ति'-शब्दौ चाधिकृत्य भट्टलोल्लट—श्रीशंकुक-भट्टनायक-अभिनवगुप्तपादाचार्यैः अस्य सूत्रस्य विस्तरशो व्याख्या कृता। सर्वेषां मतानाम् अत्र समीक्षणं तु अनपेक्षितम्। संक्षिप्तरूपेण इत्थं कथयितुं शक्यते—दैनिकजीवने मानवानां सर्वाः क्रियाः काव्ये उपनिबद्धा आनन्दरूपा भवन्ति। काव्याध्ययनेन नाट्यदर्शनेन च पुनः ता एव क्रिया रसरूपेण आस्वाद्यन्ते। विभावादिभिः अभिव्यञ्जित रसः काव्यस्यात्मा। 'वाक्यं रसात्मकं काव्यमिति अभिहिता। विश्वनाथेन रसः काव्यात्मत्वेन प्रतिष्ठापितः। रसं विना काव्यस्य कल्पना अपि असम्भवा। रसशून्यं काव्यं त्वन्तस्तत्त्वशून्यमेव भवन्ति। साहित्यदर्पणकारेण कथितम्—'काव्यस्य शब्दार्थौ शरीरं रसादिश्चात्मा'—इति।

आचार्य भरतेन नाट्यशास्त्रे शृंगाराद्यष्टरसानां रत्याद्यष्टस्थायिभावानां च व्याख्या कृताः। पुनश्च काव्यप्रकाशकारेण शान्तो नवमरसरूपेण प्रतिष्ठितः। एषु शृंगारो रसराजत्वेन स्वीकृतः अनेकैः विद्वद्भिः। महाकविना भवभूतिना-करुणरसप्रधानं नाटकं कृत्वा करुणस्य सर्वातिशायित्वं प्रतिपादितम्। कपिलेनापि कथितम्—

कारुण्यं जगतो मूलं काव्यमूलं निसर्गतः।
करुणार्द्रस्य स्वान्तस्य रससिद्धिरनुत्तमा॥

जगदिदं सुखदुःखात्मकम्। मानवजीवनस्य पूर्णत्वमपि सुखदुःखयोः समन्वये एव निहितम्। जगति दुःखस्यैव प्रसारः सर्वत्र परिलक्ष्यते। दुःखमूलके सुखे, विप्रलम्भमूलके संभोगे, शोकमूलके हर्षे, वियोगदुःखानन्तरसंजातसंयोगे कारुण्यस्यैव प्राधान्यम्। सर्वत्र कारुण्यस्य स्थापत्यमुद्वीक्ष्यैव भवभूतिना उद्घोषितम्—

एको रसः करुण एव निमित्तभेदाद्
भिन्नः पृथक् पृथगिव श्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान् विकारान्
अम्भो यथा सलिलमेव हि तत् समस्तम्।

सर्वेषाँ रसानां करुणमूलत्वमिति भवभूतेर्मतम्।

काव्योत्पत्तौ च करुणस्य महती उपादेयता। शोकार्तहृदयं द्रवितं भवति। चित्तद्रवत्वमेव काव्यस्य कारणम्यि अनेनैव क्रौञ्चवियोगोत्थं क्रौञ्च्याः

दुःखमनुभूय वाल्मीकेः मुखात् 'मा निषाद प्रतिष्ठामि'त्यादि काव्यात्मकध्वनिः निःसृतः। ध्वन्यालोककारेणोक्तम्—

क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः। काव्ये करुणरसस्य महत्त्वं तु स्पष्टमेव। कालिदासस्य पूर्ववर्ति-काव्येषु करुणरसस्य योजना कृता। वाल्मीकीय-रामायणं तु करुणरसप्रधानकाव्यमेव मन्यते। कालिदासस्य काव्येषु कारुण्यस्य मञ्जुलनिवेशः प्राप्यते। रघुवंशमहाकाव्ये अजविलापः, वनवासितायाः सीतायाः विलापश्च, कुमारसम्भवमहाकाव्ये रतेर् विलापोऽतीव मार्मिकाः। अस्य करुणावस्थाया यथार्थचित्रणमतीव हृदयविद्रावकम्। अस्य करुणवर्णनस्य कानिचित् स्थूलचित्राणि दर्शनीयानि—

पत्या अजेन सह विहरन्त्या इन्दुमत्या स्तनयोर्मध्ये नारदस्य वीणायाः पुष्पमेकं पतितम्, पुष्पप्रहारेण सा मृता। क्रन्दन् अजः कथयति यत् यदि गात्रसङ्गमात् कुसुमान्यपि आयुः अपोहितुं समर्थानि तदा विधिना प्रयुक्तानि सर्वाणि वस्तूनि प्राणहरणे समर्थानि (रघु० ८/४४) यदि स्रगियं प्राणहरणे समर्था तदा मम हृदये स्थिता माला मम प्राणान् कथं न हन्ति—

स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम्।
विषमप्यमृतं क्वचिद् भवेदमृतं वा विषमीश्वरेच्छया॥
(तदेव ८/४६)

श्लोकस्य पूर्वार्द्धेऽजस्य हृदयस्थशोकः तीव्रेण प्रस्फुटित उत्तरार्द्धः शोकनिवारकं समाश्वासनस्थलं चाऽस्ति।

कालिदासस्य कारुण्ययोजनायां हृदयद्रावणस्य महती शक्तिः। कविहृदयस्य तरलानुभूतिः च विद्यते। रघुवंशमहाकाव्ये एव सीतानिर्वासनप्रसङ्गे लक्ष्मणस्याचेतनत्ववर्णनं सीतायाः शोकवर्णनं च अतीव भावपूर्णे स्तः। लक्ष्मणमुखेन सीता स्वनिर्वासनजन्यं श्रीरामस्यादेशं श्रुत्वा मूर्च्छिता जाता। तया सह लक्ष्मणोऽपि मूर्च्छितोऽभवत्। मूर्च्छनत्वात् सीता स्वदुःखं तु न विवेद परन्तु लब्धसंज्ञा सा लक्ष्मणस्य दशां दृष्ट्वा भृशं दुःखिता अभवत्।

सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः।
तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः॥
(रघु० १४/५६)

'मोहाद् अभूत् कष्टतरः प्रबोधः'—इत्यत्र सीतायाः शोकत्वं तु व्यक्तमेव, हृदयस्य दयालुताऽपि अभिव्यञ्जितः लक्ष्मणे निवृत्ते सति सीता दुःखातिरेकान्मुक्तकण्ठं भीता कुररीव भूयिष्ठं चुक्रोश—

तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते ।
सा मुक्तकण्ठं व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः ।।
(रघु० १४/६८)

चतुर्थचरणे 'चक्रन्द' क्रियापदेन 'कुररीव' उपमया च शोकाधिक्यं ध्वन्यते ।

शोकावस्थायां मूर्च्छा एव शान्तिदा भवति, किन्तु बोधनं तु दुःखहेतुः । जीवने इयमवस्था तु शोकाधिक्यास्यैव भवति । कुमारसम्भवमहाकाव्यस्य चतुर्थाङ्के रतिविलापे करुणरसस्यातिशायित्वं दृश्यते । विधिः शोकाभितप्तं जनं मुहुर्मुहुः सातयति न तु तस्य प्राणान् हरति । अतएव नववैधव्येन दुःखिता रतिर् विधिना पुनर्विबोधिता दुःखं सोढुम्—

अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ।।
(कु० सं० ४/१)

विपत्काले प्रियजनस्य दर्शनेन दुःखं भृशं वर्धते । अनेनैव कामदेवस्य मित्रं वसन्तं दृष्ट्वा रतिर् अतीव दुःखिता जाता—

स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ।।
(कु० सं० ४/२६)

इयं कवेः लौकिकानुभूतिः । लोकव्यवहारेपि इयं स्थितिः दृश्यते ।

कालिदासः प्रकृतिप्रेमी कविः । अस्य कारुण्ययोजनायामपि अस्य प्रकृतिप्रेम्णः प्रभावः परिलक्ष्यते । शोकावस्थायाम् अस्य प्रकृतिरपि विलपति, शोकाभितप्ता भवति, शोकातुरं जनं समाश्वासयति च । महाराजस्य अजस्य शोकेन विहगा अपि दुःखिताः संजाताः—

उभयोरपि पार्श्ववर्तिनां तुमुलेनार्तस्वरेण वेजिताः ।
विहगाः कमलाकरालयाः समदुःखा इव तत चुक्रुशुः ।।
(रघु० ८/३९)

शोकावस्थायां प्रकृतेर् उद्दीपनत्वमपि दृश्यते—

मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमा ।
विधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसाम्प्रतम् ।।

इन्दुमत्याः प्रकृतिप्रेम स्मृत्वा अजस्य शोकोऽधिकतरं वर्धते । अजस्य आर्त्त-विलापेन लतावृक्षादयोऽपि व्यथिताः । तस्य अश्रुधारया लतापादपा अपि दूषिताः (रघु० ८/७०) । परदुःखेन चेतनाशून्यानां वृक्षलतादीनां शोकातुरत्वं तु कारुण्यस्य पराकाष्ठा मन्यते । सीतावनवासप्रसङ्गे सीताया दुःखेन सम्पूर्णा प्रकृतिरेव शोकातुरा जाता । मयूरा नृत्यं, वृक्षाः कुसुमानि, हरिण्यो दर्भभक्षणं च त्यक्तवन्तः (रघु० १४/६९) । अत्रापि प्रकृते रुदनत्वेन शोकातिशयता व्यज्यते । एवं प्रसंगमधीत्य सहृदयाः शोकातुरा भवन्ति । कालिदासस्य किमपि वर्णनं प्रकृतेर् असम्पृक्तं नास्ति । अतएव कारुण्येऽपि प्रकृतिः सहकारित्वेन गृहीता ।

कालिदासः शृङ्गारप्रियः कविः । अस्य करुणरसयोजनायामपि शृङ्गार-भावनायाः प्रभावो दृश्यते । मरणोत्पन्नशोकावस्थायां महाराजाय अजाय प्रियत-माया इन्दुमत्या मुखमण्डले सुरतजन्य-स्वेदविन्दवः एव दृश्यन्ते—

सुरतश्रमसंभृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते ।
(रघु० ८/५१)

नारदस्य वीणाया भ्रष्टं घातकं पुष्पं इन्दुमत्या वक्षयोर्मध्ये एव पतितम्, न तु अन्यत्र । कारुण्ये शृङ्गारस्य साहचर्यमिति कालिदासस्य रसयोजनावैशिष्ट्यम् । रतिविलापेऽपि कवेः शृङ्गारप्रियतायाः प्रभाव परिलक्ष्यते ।

शोकानन्तरं समाश्वासनं कालिदासस्य महद् वैशिष्ट्यम् । शोकातुरा रतिः आकाशवाण्या समाश्वासिता ।

अभिलाषमुदीरितेन्द्रियः स्वसुतायामकरोत्प्रजापतिः ।
अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत् ।।
(कु० सं० ४/४१)

रघुवंशमहाकाव्येऽपि वनवासेन शोकातुरा सीता महर्षिणा वाल्मीकिना समा-श्वासिता (रघु० १४/७२-७४) । रघुवंशस्याष्टमे सर्गे अजविलापवृत्तान्ते महर्षिणा वसिष्ठेन शिष्यं सम्प्रेष्य शोकाभितप्तो महाराजः अजः समाश्वासितः—'……शिष्येण किलान्वबोधयत् ।' वसिष्ठशिष्य इन्दुमत्याः पूर्वजन्मनो वृत्तान्तं

स्मारयित्वा राजानमवबोधयति (रघु० ८/७९-८१)। शोकसंतप्तत्वानन्तरं समाश्वासनमिति कला कालिदासेन वाल्मीकीय-रामायणादनुहृता।

रसयोजनायां महाकविः कालिदासः सिद्धहस्तः। अस्य कारुण्ययोजना भवभूतेर्भिन्ना विद्यते। भवभूतिना उत्तररामचरिते करुणरसः स्वाङ्गिरसत्वेन प्रतिष्ठितः। अन्येषु रसेष्वपि करुणस्यैव व्यक्तित्वं तत्र दृश्यते। परन्तु कालिदासस्य काव्येषु अङ्गरूपेण करुणरस उपलभते। अस्य कारुण्ययोजनायां कवेः शृङ्गारप्रियतायाः प्रकृतिप्रेम्णश्च महत्प्रभावः विद्यते। शोकाजन्यं विलापानन्तरं समाश्वासनं कालिदासस्य आशावादि विचारस्य परिचायकः। भवभूतेः करुणप्रसङ्गे भाषाजन्यगाम्भीर्यं समासबहुला पदावली ओजः च सन्ति, किन्तु कालिदासस्य वर्णने भाषासौकर्यं माधुर्यं स्वाभाविकता च सन्तीति शम्।

शुभम्।

—०—

डॉ० बिन्दाप्रसादमिश्रः

# वसन्तषोडशी

प्राप्ते वसन्ते रमणीयकाले
तडागमध्ये विसिनी प्रफुल्ला ।
तारावलीवद् गगने निशीव
कस्येह भूमौ न मनो जहार ॥१॥

मध्येऽम्बुजानां दिवसे रराज
रक्तारविन्दं सलिले यदा वै ।
तदा न शोभा प्रतिभाति लोके
ग्रहेषु मध्ये हरिवाहनस्य ॥२॥

यदार्कविम्बः सलिलं गतः स्यात्
वसंतकालीय महीतलस्य ।
साक्षात्क्षपानाथ इवाति भाति
तदा स हेतुर्जनमोदनाय ॥३॥

पलाशपुष्पस्य यथा वसन्ते
निकुञ्जमध्ये प्रतिभाति शोभा ।
तथा न शोभा परिलक्ष्यते सा
नभोगमध्ये धरणीसुतस्य ॥४॥

बुधो गुरुर्वैभृगुनन्दनश्च
सदैव रवे भिन्नगतिं लभन्ते ।
वसन्तकाले तु बुधादयः कौ
काव्यात्मिकां भिन्नगतिं प्रयान्ति ॥५॥

न भानुपुत्रेण कृतो विनाशः
केषां धरायां धरणीपतीनाम् ।
वसन्तमत्तेन नतेन तेन
वसंतराजो नहि रक्षितः किम् ।।६।।

वसन्तकालस्य विवाहलग्ने
भार्याग्रहो याति यथाप्रसिद्धम् ।
तथा प्रसिद्धं न गतः कदापि
चन्द्रग्रहः सूर्यग्रहो धरायाम् ।।७।।

पुष्पावली या वनवाटिकासु
प्रफुल्लिता केतुसमा न किं सा ।
मासे मधौ यन्नवयौवनानां
नोत्पीडितं किं हृदयं जनानाम् ।।८।

भृङ्गावली सा मधुरक्वणन्ती
कलीश्रुतौ किं नहि भाषते तत् ।
प्रियो वसन्तस्तव द्वारि धूर्तो
मनोरथं पूरय फुल्लिता त्वम् ।।९।।

वसन्तराजप्रत्युद्गतार्थं
प्रबोधनार्थं प्रमदाजनानाम् ।
वसन्तदूतेन रसाल वाटी
नोद्बोधिता किं मधुरस्वरेण ।।१०।।

पिकस्य कान्तां प्रति कूजनं यत्
प्रपीडितं हृद् विरहातुराणाम् ।
तद्दूहियुक्तं वचनं सदुःखं
प्रियानहो कर्षति रक्षणाय ।।११।।

कन्दर्पवाणाकुलभिन्नचिन्तः
चूतासवासेवनतत्परः सः ।
पुंस्कोकिलोराग सुपूरितो वै
मत्तः प्रियां चुम्बति चञ्चुकेन ।।१२।।

भृङ्गाङ्गना भृङ्गमिहानुयाति
कोकाङ्गना याति तथैव कोकम् ।
वसन्तकालस्य चरित्रयेतत्
प्रियञ्च सर्वत्र प्रियानुयाति ॥१३॥

नो लालितं किं दयितापदाब्जं
किं चुम्बितं नो ललनाननञ्च ।
नो मर्दितं तत् कुम्भद्वयं किं
योगेश्वरेणापि लसद्वसन्ते ॥१४॥

न मानभङ्गं कृतवान् वसन्तः
कासामहो रात्रिषु माननीनां ।
न बोधभङ्गं कृतवानहो सः
केषां मुनीनां बदरीवनेऽपि ॥१५॥

प्रसूनमालां विनिधाय केशे
नेत्रद्वये पङ्कजपत्र शोभाम् ।
कर्णद्वये सुन्दरकर्णिकारं
स्मेराननायाति वसंतबाला ॥१६॥

—०—

रामकृष्ण शास्त्री 'अव्ययः'
जम्मू

# स्वातन्त्र्योत्तरभारतम्

अद्य भारतमस्माकं प्रोच्यते नवभारतम् ।
विविच्यते समासेन स्वातन्त्र्योत्तरभारतम् ॥ १ ॥

पारतंत्र्ये यदासीन्नो भारतं ह्यविखंडितम् ।
खंडितं तत्तु स्वातंत्र्ये स्वातन्त्र्योत्तरभारतम् ॥ २ ॥

बह्वर्थधर्मशब्दस्य मुख्यार्थाज्ञानहेतुना ।
तन्निरपेक्षता–भ्रान्तं स्वातन्त्र्योत्तरभारतम् ॥ ३ ॥

स्वातन्त्र्यं ह्यागतं देशे प्रसंगैरंग-भंगकैः ।
आँग्लसत्ताप्रभावाप्तं स्वातन्त्र्योत्तरभारतम् ॥ ४ ॥

मक्षिकापातः प्रथमे ग्रासेऽभूत्पाकशासनम् ।
पृथक् स्वीकृत्य संजातं स्वातन्त्र्योत्तरभारतम् ॥ ५ ॥

"पुत्रस्तव जातः कन्या गर्भिणीति" यथाश्रुतम् ।
स्वाधीनतासुखं लेभे स्वातन्त्र्योत्तरभारतम् ॥ ६ ॥

स्वातन्त्र्यसमरेऽस्माकं यदासीदेकताबलम् ।
तदभावसमापन्नं स्वातन्त्र्योत्तरभारतम् ॥ ७ ॥

यथातथा समारब्धं विदेशप्रमुखावृतम् ।
"माउण्टवेटनाज्ञप्तं" स्वातन्त्र्योत्तरभारतम् ॥ ८ ॥

आचार्यो राजगोपालस्ततोऽभून्मुख्यपूरुषः ।
स्वल्पकालं तदाधीनं स्वातन्त्र्योत्तरभारतम् ॥ ९ ॥

प्रसादोत्तरराजेन्द्रस्ततोऽभूद्राष्ट्रपालकः ।
स्वल्पं तदा समाश्वस्तं स्वातन्त्र्योत्तरभारतम् ॥१०॥

शास्तुः शक्तिमतिक्रम्य महामात्यपदे स्थितः ।
श्रीनेहरूस्तदाक्षिप्तं स्वातन्त्र्योत्तरभारतम् ॥११॥

गृहमंत्री पटेलोऽभूद्राज्यसंघमिलापकः ।
विलंबितं तु काश्मीरे स्वातन्त्र्योत्तरभारतम् ॥१२॥

श्रीनेहरूप्रभावेण तत्र धाराऽचलत् पृथक् ।
आशंकितं च तत्रत्यं स्वातन्त्र्योत्तरभारतम् ॥१३॥

पाके व्यर्थार्थदानेन हननं गांधिनोऽभवत् ।
संत्रस्तमिव संजातं स्वातन्त्र्योत्तरभारतम् ॥१४॥

कामना रामराज्यस्य कामराज्येन वंचिता ।
दोलायंत्रे समारूढं स्वातन्त्र्योत्तरभारतम् ॥१५॥

हिन्दुत्वं मूलतत्त्वं हि हिन्दुस्ताने युगानुगम् ।
तदुपेक्ष्याग्रगंताऽभूत् स्वातन्त्र्योत्तरभारतम् ॥१६॥

प्रभूतवित्तमादाय पाकेनाक्रमितं स्वयम् ।
काश्मीरे तदाऽयुध्यत् स्वातन्त्र्योत्तरभारतम् ॥१७॥

डुग्गरपंचांबुजानां तु सेना पूर्वं न प्रेषिता ।
युधि पाकेन संक्लिष्टं स्वातन्त्र्ययोत्तरभारतम् ॥१८॥

पश्चात्तत्रोक्तवीराणां बहुलं सैन्यमागतम् ।
पाकं मर्मंद संग्रामे स्वातन्त्र्योत्तरभारतम् ॥१९॥

शत्रुपक्षप्रपञ्चेषु विजयेऽपि वृथाऽकरोत् ।
अकाले रणविश्रामं स्वातन्त्र्योत्तरभारतम् ॥२०॥

दत्वार्धभागं निःशुल्कं रिपवे गृहभेदिने ।
शङ्कापंके मुधा मग्नं स्वातन्त्र्योत्तरभारतम् ॥२१॥

वीरभारतवर्षस्य त्यागं संवीक्ष्य लोभतः ।
चीनेनापि समाक्रान्तं स्वातन्त्र्योत्तरभारतम् ॥२२॥

तस्मै च तिब्बतं दत्वा मृषा मैत्री समर्जिता ।
लोकेनालोचितं तीव्रं स्वातन्त्र्योत्तरभारतम् ॥२३॥

सीमाभंगो न चाऽद्यापि गतोऽस्तं पाकचीनयोः ।
द्वाभ्यामेव समाक्षिप्तं स्वातन्त्र्योत्तरभारतम् ॥२४॥

शान्तिवार्तासु संप्राप्तं समाधानं न सांप्रतम् ।
सीमोल्लंघनसंक्षुब्धं स्वातन्त्र्योत्तरभारतम् ॥२५॥

विवादनाशनाऽशक्तो नेहरूर्मरणं गतः ।
अकरोद् विरहाधीनं स्वातन्त्र्योत्तरभारतम् ॥२६॥

पूर्वं मृतराजेन्द्रस्य पदे मुख्ये स्थितेन च ।
राधाकृष्णेन संबुद्धं स्वातन्त्र्योत्तरभारतम् ॥२७॥

वृतस्तेन महामात्यः शास्त्री लालबहादुरः ।
अभवत्प्राणभृद्भूयः स्वातन्त्र्योत्तरभारतम् ॥२८॥

संविधानप्रमाणेन विद्याबुद्धिबलेन च ।
अभ्युदयार्थमग्रेऽभूत् स्वातन्त्र्योत्तरभारतम् ॥२९॥

दिवानिशं प्रगत्यर्थं कर्मिष्ठोऽसौ महामतिः ।
शास्त्री चकार स्वात्मज्ञं स्वातन्त्र्योत्तरभारतम् ॥३०॥

पुनर्युद्धे च पाकेन लब्धः सद्यः पराजयः ।
शास्त्रीप्रशासने दृष्टं स्वातन्त्र्योत्तरभारतम् ॥३१॥

वेलाविदो वदन्त्येवं शास्त्री षड्यंत्रिभिर्हतः ।
हतभाग्यं पुनर्जातं स्वातन्त्र्योत्तरभारतम् ॥३२॥

विषमे संकटे देशे नेहरूपुत्रीन्दिरा तदा ।
तत्पदस्थाऽकरोच्छक्तं स्वातन्त्र्योत्तरभारतम् ॥३३॥

राधाकृष्णोदूर्ध्वं जाकिर-हुसेनेन पदं वृतम् ।
सर्ववर्गैः सुपुष्टं च स्वातन्त्र्योत्तरभारतम् ॥३४॥

पाकेन सह संग्रामे समभूद् विजयो महान् ।
विदधौ पाकखंडं च स्वातन्त्र्योत्तरभारतम् ॥३५॥

भारतीया महामात्या विख्याता प्रियदर्शिनी ।
वर्धितं यत्प्रभावेण स्वातन्त्र्योत्तरभारतम् ॥३६॥

पदे ज़ाकिरहुसेनस्य स्थितो वी० वी० गिरिर्बुधः ।
अभूत्प्रशस्तं तेनापि स्वातन्त्र्योत्तरभारतम् ॥३७॥

तदूर्ध्वं फख़रुद्दीन-अली-अहमदोऽभवत् ।
राष्ट्राध्यक्षस्तदा शान्तं स्वातन्त्र्योत्तरभारतम् ॥३८॥

जे० पी० नारायणो नेता चकारान्दोलनं महत् ।
तत्काले क्रान्तिकृज्जातं स्वातन्त्र्योत्तरभारतम् ॥३९॥

श्री-मुरारजी-देसाई महामात्यो वृतस्तदा ।
अपश्यत् परिवर्तं च स्वातन्त्र्योत्तरभारतम् ॥४०॥

तदानीं रेड्डिसंजीवो राष्ट्राध्यक्षपदे स्थितः ।
जनतासंघसंयुक्तं स्वातन्त्र्योत्तरभारतम् ॥४१॥

ततश्चरणसिंहेन महामात्यपदं वृतम् ।
मुहुरान्दोलितं जातं स्वातन्त्र्योत्तरभारतम् ॥४२॥

शीघ्रं तमपि निर्जित्य महामात्येन्दिराऽगमत् ।
पुनरग्रगतिं प्राप्तं स्वातन्त्र्योत्तरभारतम् ॥४३॥

राष्ट्राध्यक्षपदं व्याप्तं जैलसिंहेन सादरम् ।
मतसम्मतसन्नद्धं स्वातन्त्र्योत्तरभारतम् ॥४४॥

जातं पंचनदे क्रूरं भयमातङ्कवादिनाम् ।
कुपितं तद् दृष्ट्वा श्रुत्वा स्वातन्त्र्योत्तरभारतम् ॥४५॥

उग्रवाद-विरोधेन सक्रियं मथनेन च ।
जागृतं सर्वकारेण स्वातन्त्र्योत्तरभारतम् ॥४६॥

इन्दिरा निहताऽकाले मूढैरुग्रपंथिभिः ।
हाहाकारमयं जातं स्वातन्त्र्योत्तरभारतम् ॥४७॥

अन्ते ज्येष्ठसुतस्तस्या राजीवस्तत्पदे स्थितः ।
युवशक्त्यावृतं सद्यः स्वातन्त्र्योत्तरभारतम् ॥४८॥

नवैर्भावैर्नवोत्साहैर्नवीनोद्यमकर्मभिः ।
अभून्नव्यक्रियायुक्तं स्वातन्त्र्योत्तरभारतम् ॥४९॥

श्रीवेंकटरमणोऽपि राष्ट्राध्यक्षपदे स्थितः ।
अचलन्नूतनोद्योगैः स्वातन्त्र्योत्तरभारतम् ॥५०॥

चतुश्चत्वारिंशद्वर्षैः स्वातन्त्र्यालोचनं कृतम् ।
सत्तामहत्तासंपृक्तं स्वातन्त्र्योत्तरभारतम् ॥५१॥

संसदोऽपि संभवति पंचाब्देषु पुनर्भवः ।
निर्वाचनप्रथोत्कृष्टं स्वातन्त्र्योत्तरभारतम् ॥५२॥

पूर्वपूर्वकृतं कार्यं वर्ध्यते चोत्तरोत्तरम् ।
सत्ताभृन्नेतृभिर्भुक्तं स्वातन्त्र्योत्तरभारतम् ॥५३॥

विधानं स्वीकृतं नैजं राष्ट्रीयं सर्वतोमुखम् ।
सेवते तद् यथाकालं स्वातन्त्र्योत्तरभारतम् ॥५४॥

लोकसभा राज्यसभा द्वौ भागौ संसदोऽधुना ।
ताभ्यां विचार्य चलति स्वातन्त्र्योत्तरभारतम् ॥५५॥

तत्रापि प्रभेदोऽस्ति स्फुटः पक्षविपक्षयोः ।
दलबलैः संयुक्तं हि स्वातन्त्र्योत्तरभारतम् ॥५६॥

सदस्याः सन्ति केचित्तु निर्दला अपि संसदि ।
तैरपि बोधितं काले स्वातन्त्र्योत्तरभारतम् ॥५७॥

नेतारः प्रान्तिकाः सर्वे केन्द्राधीनाः परस्परम् ।
सम्मिलित्वाऽऽलोचयन्ति स्वातन्त्र्योत्तरभारतम् ॥५८॥

आक्षिपन्ति सभामध्ये सत्तापक्षं विपक्षगाः ।
प्रश्नोत्तरैरभूद् बुद्धं स्वातन्त्र्योत्तरभारतम् ॥५९॥

वाग्युद्धे मुष्टिघातोऽपि कदाचित् संप्रजायते ।
लोके कौतुकं कुरुते स्वातन्त्र्योत्तरभारतम् ॥६०॥

चंचलश्चप्पलाघातः कुर्सीप्रहरणं तथा ।
प्रदर्शयति पत्रेषु स्वातन्त्र्योत्तरभारतम् ॥६१॥

बहुधा व्यंग्यचित्राणि कुकृत्यानि बहूनि च ।
सदुःखं ह्यालोकयति स्वातन्त्र्योत्तरभारतम् ॥६२॥

लाभहानि-विवादेषु प्रान्तानां कलहो भवेत् ।
साम्ना सर्वं समाधत्ते स्वातन्त्र्योत्तरभारतम् ॥६३॥

आदानं सम्प्रदानं च पदार्थानां परस्परम् ।
कुरुते सर्वराष्ट्रेषु स्वातन्त्र्योत्तरभारतम् ॥६४॥

अभियोगोऽनुयोगोऽपि युक्तियुक्तो विचार्यते ।
नीतिं नित्यमाश्रयति स्वातन्त्र्योत्तरभारतम् ॥६५॥

उक्तं संक्षिप्तपूर्वार्धं संविचार्योत्तरार्धकम् ।
सम्मिश्रणेन वर्तेत स्वातन्त्र्योत्तरभारतम् ॥६६॥

स्त्रीणां स्त्रियो नरा नृणां संप्रकुर्युः प्रबोधनम् ।
गृहभेदं न कुर्वीत स्वातन्त्र्योत्तरभारतम् ॥६७॥

"सत्यमेव जयते" वाक् सक्रिया स्याद् गृहे गृहे ।
सत्योदितं जयं कुर्यात् स्वातन्त्र्योत्तरभारतम् ॥६८॥

योऽस्मान् विद्वेष्टि तं द्विष्मो यो नो हृष्यति सखा सः ।
शत्रुं मित्रं परीक्ष्येत स्वातन्त्र्योत्तरभारतम् ॥६९॥

प्रचारार्थं विदेशेषु विदुषां वरणं वरम् ।
नटयूथं निराकुर्यात् स्वातन्त्र्योत्तरभारतम् ॥७०॥

वसनाशनभूमीनां साहाय्यं यत्र दीयते ।
उदारं निर्धनेषु स्यात् स्वातन्त्र्योत्तरभारतम् ॥७१॥

अहं राष्ट्रस्य राष्ट्रं मे सर्वस्तमितिभावनाम् ।
वर्धयेज्जनचित्तेषु स्वातन्त्र्योत्तरभारतम् ॥७२॥

यत्र तत्र च सर्वत्र "चमचेत्यभिधाभृताम्" ।
पैशुन्यं तिरस्कुर्यात् स्वातन्त्र्योत्तरभारतम् ॥७३॥

महर्घता महादीर्घा संभवेन्न दिने दिने ।
अंकुशं स्थापयेत्तत्र स्वातन्त्र्योत्तरभारतम् ॥७४॥

मेलनं हीनद्रव्याणां खाद्येषु मा भवेत् क्वचित् ।
दंडयेद् वंचकान् सर्वान् स्वातन्त्र्योत्तरभारतम् ॥७५॥

यथाशीघ्रं विधातव्यं शासनं सानुशासनम् ।
राष्ट्रभक्त्या प्रवर्तेत स्वातन्त्र्योत्तरभारतम् ॥७६॥

सर्वरक्षाव्यवस्थासु सैन्यसंघस्य प्रक्रियाम् ।
सुगुप्तां रक्षयेत् सर्वां स्वातंत्र्योत्तरभारतम् ॥७७॥

"द्वैगर्तरणवीरस्य" संस्कृते सैन्यशिक्षणम् ।
प्राक्कृतं त्वद्य स्वीकुर्यात् स्वातन्त्र्योत्तरभारतम् ॥७८॥

मनसा सावधानेन क्रियां दलबलैः कृताम् ।
सर्वदा सन्निरीक्ष्येत स्वातन्त्र्योत्तरभारतम् ॥७९॥

शिक्षासंस्थासु छात्राणां बुद्धिभेदो न युज्यते ।
सुपरीक्षां सदा कुर्यात् स्वातन्त्र्योत्तरभारतम् ॥८०॥

भ्रष्टताकृष्टधूर्तेषु चौरजारोग्रवादिषु ।
दंडकृत् संभवेत् सद्यः स्वातन्त्र्योत्तरभारतम् ॥८१॥

सेवायामुपयुक्तेषु यूनां चयनकर्मसु ।
विवर्जयेत् पक्षपातं स्वातन्त्र्योत्तरभारतम् ॥८२॥

पाणिग्रहणसंस्कारे गुप्तदानाद्युपद्रवान् ।
निरोधयेत् सत्साहित्यैः स्वातन्त्र्योत्तरभारतम् ॥८३॥

कल्याणं परिवाराणां स्थिरबुद्ध्या यदीच्छति ।
शिक्षयेद् दम्पती धर्मैः स्वातन्त्र्योत्तरभारतम् ॥८४॥

क्रीडाकौतुककामानां युवतीनां यूनामपि ।
स्पर्धाशक्तिं विनिर्णीयात् स्वातन्त्र्योत्तरभारतम् ॥८५॥

अल्पसंख्यकनादेन विघटनं संभाव्यते ।
जयेत्तद्राष्ट्रवादेन स्वातन्त्र्योत्तरभारतम् ॥८६॥

देशेऽचलचरित्राणां निर्माणं चलचित्रकैः ।
न हि संभावयेत् क्वापि स्वातन्त्र्योत्तरभारतम् ॥८७॥

संप्रदायविवादानां मूलोच्छेदो भवेदिह ।
सर्वेक्षणं संप्रकुर्यात् स्वातन्त्र्योत्तरभारतम् ॥८८॥

मुसल्मानैर्हिन्दुभिर्वा यस्य यत्केन्द्रमाहृतम्
तत्प्रत्यावर्तयेत्तस्मै स्वातन्त्र्योत्तरभारतम् ॥८९॥

संभाव्यते प्रयत्नेन सत्येवं नहि कुत्रचित् ।
द्रक्ष्यति भूयः कलहान् स्वातन्त्र्योत्तरभारतम् ॥९०॥

काश्मीरे मुसल्मानानां पंचनदे चाऽकालिनाम् ।
विमतं संप्रशमयेत् स्वातन्त्र्योत्तरभारतम् ॥९१॥

हर्याणाविप्रजाटानां दिल्यां विदेशिनामपि ।
निरोधयेत् षड्यंत्राणि स्वातंत्र्योत्तरभारतम् ॥९२॥

राजस्थाने स्वार्थिनां वै सौराष्ट्रे कच्छकामिनाम् ।
समाधानं विदधीत स्वातन्त्र्योत्तरभारतम् ॥९३॥

महाराष्ट्रे शिवां सेनां तामिलनाडौ चांग्लजाम् ।
प्रबोधयेत् सुबुध्याशु स्वातन्त्र्योत्तरभारतम् ॥९४॥

मैसूरे केरले वापि गौरांगीनपुरोधसाम् ।
अभिचारं निरीक्ष्येत स्वातन्त्र्योत्तरभारतम् ॥९५॥

उत्कले नागलैण्डेऽपि पादरीणां क्रियाः स्वयम् ।
शोधयेद् दक्षतायुक्त्या स्वातन्त्र्योत्तरभारतम् ॥९६॥

बंगालासामयोर्भूम्यां चीनजालं भ्रमास्पदम् ।
त्रोटयेत् प्रभुताशक्त्या स्वातन्त्र्योत्तरभारतम् ॥९७॥

असंतुष्ट-काँग्रेसस्य बिहारोत्तर-प्रदेशयोः ।
समाधानं धिया कुर्यात् स्वातन्त्र्योत्तरभारतम् ॥९८॥

चीनपाकामरीकानां रूसस्यापि विशेषतः ।
युक्तायुक्तमतं ध्यायेत् स्वातन्त्र्योत्तरभारतम् ॥९९॥

एकतायै स्वराष्ट्रस्य राष्ट्रभाषापदे शुभे ।
संस्कृतमेव संवृणुयात् स्वातन्त्र्योत्तरभारतम् ॥१००॥

बहुना किमिहोक्तेन जीयाद् भारतभारती ।
विश्वभाषाविभुर्भूयात् स्वातन्त्र्योत्तरभारतम् ॥१०१॥

—o—

**डॉ० ओम् प्रकाश पाण्डेयः**
लखनऊ

# अग्निशिखासम्भूता पाञ्चाली

द्रौपद्याश्चरित्रमस्माकं साहित्ये सर्वाधिकं महनीयं विलक्षणञ्चास्ति। बहुपतिभुक्तापि सा कन्यारूपेणैव संस्मर्यते। महाभारते तस्या जन्मनो यद्विवरणमुपलभ्यते, तत्तु अनैसर्गिकत्वाद् विवादास्पदं मन्यते। इतिवृत्तानुसारं द्रोणेनावमतः क्षुब्धः पाञ्चालाधिपतिर् द्रुपदो द्रोण-प्रतिकारसमर्थपुत्र-प्राप्ति-कामनया प्रेरितः सन् यागार्त्विज्याय मुनिमुपयाजं न्यवेदयत्। उपयाजोऽनुचितं कृत्यम्मत्वा तन्नाङ्गीचकार। अनन्तरमुपयाजानुजेन याजेन द्रुपदाभीष्टो यागः ऋत्विग्रूपेण सम्पादितः। यज्ञान्ते यज्ञवेद्या धृष्टद्युम्नसंज्ञकः पुत्रः कृष्णा नाम्नी पुत्री चेति सन्ततिद्वयी सञ्जाता। कालान्तरत इयमेव कन्या पाञ्चाली, याज्ञसेनी, द्रौपदी प्रभृतिभिर् नामभिरपि प्रसिद्धिं गता। सर्वश्रेष्ठरूपवत्या अस्याः कन्याया देह-समुद्गतो नीलकमल-तुल्यो गन्धः क्रोशं यावत् प्रसरति स्म यथोल्लिखितम्महाभारते--

> 'यज्ञसेनस्य दुहिता द्रुपदस्य महात्मनः।
> वेदीमध्यात् समुत्पन्ना पद्मपत्रनिभेक्षणा॥
> दर्शनीयानवद्याङ्गी सुकुमारी मनस्विनी।
> नीलोत्पलसमो गन्धो यस्याः क्रोशात् प्रवाति वै॥'[१]

विचारणीया त्वियं यज्ञवेद्येवास्ति, यस्याः शब्दार्थग्रहणाद् द्रौपद्या जन्म स्थूलाद्धोमकुण्डाल्लक्ष्यते, किन्तु प्रजननविज्ञानविरुद्धत्वादियं प्रक्रियाऽऽपातदृष्ट्या न जनविश्वसनीयतामाप्नोति।

---

१. महा०, आदि० स्वयंवर० १८३.८-१०

वस्तुतो महाभारतस्य मान्यता इतिहासग्रन्थतया विद्यते, यस्य व्याख्याने शब्द-प्राधान्यमनादृत्य विद्वद्भिरर्थ-प्रामुख्यमेव स्वीक्रियते, यथोक्तं मम्मटाचार्येण स्वकीये काव्यप्रकाशे—

'तात्पर्यवदितिहासपुराणेभ्यः'[1]

यज्ञवेद्या यथार्थ-सन्धानायास्माभिर्वैदिकं वाङ्मयमनुशीलनीयम्, यतो हि महाभारते वेदानामेव लोकरुचिपुरस्सरो विस्तरोऽवलोक्यते। स्पष्टतयाऽस्य महाग्रन्थस्य वैदिक आधारो बहुधा महर्षिव्यासेनैवोल्लिखितो दृश्यते—

'वेदैश्चतुर्भिः संयुक्तां व्यासस्याद्भुतकर्मणः।
संहितां श्रोतुमिच्छामि पुण्यां पापभयापहाम्॥
तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्।
इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः॥
ऋचो यजूंषि सामानि वेदाध्यात्मं तथैव च।'[2]

अनुक्रमणीपर्वण्येव इतिहास-पुराणाभ्यां वेदोपबृंहणस्य व्यवस्थापि प्रदत्तास्ति—

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।'[3]

द्रौपद्याः जन्म यस्या यज्ञवेद्या बभूव, तस्यास् तात्त्विकं स्वरूपं ताण्डिनां छान्दोग्योपनिषदि प्रदिष्टं वर्तते। वस्तुतो नारीमात्रमेवाग्निवत्तामावहति। तस्या जननेन्द्रियमेव समित्स्थानीयम्, सहवास-निमित्तं पुरुषस्य निवेदनं धूम्रतुल्यम्, योनिः ज्वालारूपा, अन्तस्संचालनमङ्गाररूपम्, सहवासजन्या आनन्दानुभूतिः स्फुलिङ्गसमा। अस्मिन्नेवाग्नौ वीर्यरूपाया आहुत्याः प्रक्षेपणात् गर्भोत्पत्तिर्जायते-'योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्युपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः। तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति'[4]

अनया छान्दोग्य-श्रुत्या स्पष्टमाभाति यद् द्रौपद्या जन्मापि प्रजनन-विज्ञानस्य सामान्यप्रक्रियया एव बभूव।

---

१. काव्य०, १.१
२. महा०, १.२१, ५४, ६६
३.
४.

प्रश्नस्तावदयं यन्महाभारतकारेणात्र अभिधावृत्तिमनाश्रित्य वृत्त्यन्तरं किमर्थमाश्रितम् ? व्याससदृशस्य समर्थस्य कवरेत्र किम्प्रयोजनम् ? प्रसंगेऽस्मिन् विचारानन्तरं प्रतीयते यद् द्रौपदीगतां तेजोमयतां मनस्वितां च पुरस्कर्त्तुमेव कविना एषा वृत्तिः समाश्रिता। अनयोर् गुणयोः परिचयो महाभारते बहुधा द्रौपद्या वाग्विस्फोटैरवाप्यते वस्तुतो महाभारतस्य प्रणेता द्रौपद्याश्चरित्रनिरूपणसन्दर्भेषु कदाचिदपि नार्या अग्निशिखामयं स्वरूपं विस्मर्त्तु, न शशाक। यः कोऽपि तामग्निस्वरूपां विस्मृत्य क्रीडनकमात्रम्मत्वा तया अपक्रीडितुमिच्छति तस्य विनाशो दुर्योधनवदेव बोभवीतीति सन्देश-प्रदानायैव महाभारतकारेण द्रौपद्या जन्मस्थली यज्ञवेदी निरूपिता ॥

—o—

डॉ० शशिनाथ झा
दरभङ्गा

# कौमुदी-महोत्सवः

१

शारदी सुन्दरी ह्लासयुक्तेति यत्
काश-पुष्पच्छलेनैति मार्गेऽमले ।
संस्मरन्तीह हेमन्तकस्यागमं
नूनमेषात्र शृङ्गारहारावली ॥

२

मानसे पद्मनेत्रा समुल्लासिता
कौमुदी-ह्लास-सोल्लास-सञ्ज्ञापिका ।
शुभ्रवस्त्रावृता यत् समुत्कण्ठिता
नायकस्यागमस्तत्र हेतुर्ध्रुवम् ॥

३

शारदं पर्व शुभ्रं समायाति यत्
सादरं सर्वलोकेषु संवीक्ष्यते ।
तत्र धन्यो धनी स्वाभिलाषाऽऽदृतः
किन्त्वधन्योऽधनः स्वाभिलाषाऽऽकुलः ॥

४

सर्वपर्वाणि चायान्ति यत् साम्प्रतं
हन्त ! किं स्यात् कथं स्वाभिलाषाभरः ।
आगताऽद्यैव दुर्गा भवानी गृहं
स्वागते चोपवासो हि सम्भाव्यते ॥

५

किन्तु ये कर्षका नूत्न-मार्गाश्रयाः
तत्कृते चाऽऽश्विनोऽपीह हेमन्तकः ।
वर्षमध्ये न मासो भवेद् द्वादशो
धन्य-धान्याऽऽगमस्तत्र षाण्मासिकः ॥

६

सर्वमार्गाः स्वतः पङ्कहीना यतः
सर्वखातेषु यत् तोयमच्छं वरम् ।
तेन मन्येऽत्र जित्वाऽद्य वर्षारिपुं
राजते साम्प्रतं शारदः सन्नृपः ॥

७

मेघ-वस्त्रेषु वर्षासु यः कालिमा
तं सितीकर्तुमेवाऽत्र यः क्षालकः ।
फेनिलस् तस्य चन्द्रो नभः सज्जलं
शारदः सोऽत्र शस्तः सदा विश्रुतः ॥

८

अम्बरं निर्मलं जीवनं निर्मलं
तद्वदेवाऽत्र जातं पयो निर्मलम् ।
कौमुदी निर्मला पद्मिनी निर्मला
शारदं पर्व चेत्थं जगन्निर्मलम् ॥

९

यत्र वर्षासु पङ्काकुलं स्थण्डिलं
दुर्दशापन्नमासीत् सुदुर्दर्शनम् ।
गो-महिष्यादिकाश्चोपविष्टाः सुखं
तत्र राजन्त इत्येष पुण्योदयः ॥

१०

पूर्णिमा कौमुदी शारदी शर्वरी
शुभ्रवस्त्रावृता शारदा सारदा ।
भाति लक्ष्मीप्रदा बुद्धिविद्याकरी
पूज्यते श्रीश्च सर्वत्र कोजागरा ॥

११

अद्य रम्भाफलं, सन्मखान्नं मुदा
नारिकेलोदकं, पूग-ताम्बूलकम् ।
श्रीप्रसादं सुभक्ष्येह सर्वे जनाः
कौमुदं गौरवं मानयन्त्युत्सवम् ॥

१२

या च हत्त्वा रिपुं दुर्गतिं दुर्मतिं
सद्य एवाऽत्र दुर्गेति सम्पूज्यते ।
अन्नपूर्णास्वरूपेऽपि सैवाधुना
कौमुदं पर्व चाऽऽलोकितुं संगता ॥

१३

कौमुदी-दुग्ध-लिप्तं समस्तं जगत्
काशपुष्पाञ्चितं शुभ्रतोयाऽन्वितम् ।
दिव्य-शेफालिका-सौरभेणाऽन्वितं
नूनमेतत् करोति श्रियाः स्वागतम् ॥

१४

भाति रम्भावनं रम्यलीलाकरं
यत्र सम्भावनं श्रीसमर्च्चाकृते: ।
मालती-मालिका राजते निर्भरं
कौमुदीपर्व सोल्लासमातन्यते ॥

१५

यत् प्रसन्नं दिनं यामिनीव ध्रुवं
तत् तथैवाद्य रात्रिर्दिवेव स्वयम् ।
जागरामत्र कोजागरा-पर्वके
सन्निशीथेऽपि कुर्वन्ति लोका यत: ॥

१६

द्वारमद्य ध्रुवं सर्वसोल्लासितं
साधु खेलान्वितं देवलोकोपमम् ।
नन्विदं पर्व राजत्यजस्रं गते
वैजयन्त्युत्सवे साधु दुर्गाऽर्चने ॥

१७

पूर्णचन्द्रेऽमले दर्पणे दर्शनं
साधु शेफालिका-मालिका-गुम्फनम् ।
निर्मलं वारि चाऽभ्यञ्जनं रञ्जनं
शारदी संविधत्तेऽद्य शृङ्गारकम् ॥

१८

निर्मलो मेघ एवास्ति शाटी ध्रुवं
तारका-मण्डलं हार एकावली ।
चन्द्रविम्बं मुखं, कौमुदी तत्स्मितं
शारदी सुन्दरी भाति मुग्धाऽङ्गना ॥

१६

या हि मुग्धाऽङ्गना खञ्जनाक्षी मृदुः
काशदुग्धाऽङ्गलिप्तेऽङ्गणे क्रीडति ।
सा प्रभूतान्न-सम्भावनाऽऽशाऽऽश्रया
भामिनीव प्रसन्ना स्वभर्त्तुः कृतौ ॥

२०

यत्तु वर्षासु सर्वत्र पङ्काऽऽकुलं
वारि भात्यद्य तन्निर्मलं सुन्दरम् ।
ईश्वरस्योपमा तत्र दातुं वरं
केवलं दुर्मलं दुष्टचेतोऽवरम् ॥

२१

शारदी शुभ्रता सर्वतो व्यापृता
ज्ञापयत्यद्य निष्पाप-भावं यतः ।
मानवाः पापतोऽनारतं वर्जिताः
पावनाः पावकाः सन्त्वितीहाऽस्त्यतः ॥

२२

पुष्करिण्यां सुपद्मस्य फुल्लं वनं
क्षेत्रसंघे हरिद्वर्ण-धान्यादिकम् ।
लोकरक्षाकरं नूतनाऽऽशाश्रयं
सिन्धुवारादि-वृक्षेषु पुष्पोच्चयः ॥

२३

ग्रीष्मगर्वे हतश्चाऽऽगतः शीतलः
शोभनः शारदः काल इत्थं स्वतः ।
सौख्यदो निर्मलो हंसमालाऽन्वितः
प्रीतिदः सर्वसौलभ्य एको वरः ॥

२४

आगमिष्यत्यवश्यं तुषाराऽन्वितः
काल इत्थं विचार्यैव खिन्नं मनः ।
हैमनस्यान्नपूर्णस्य चाऽऽशाऽन्वितः
शान्तिमाप्नोत्यवश्यं नराणां गणः ॥

—०—

**डॉ० जयश्री चट्टोपाध्याय**
कलकत्ता

# महाभारतस्य वनपर्वणि रामायणानुभावः

रामायणमक्षय्यान्तर्भवननिधिः सर्वसाहित्यिकानाम् । असक्तोऽपि भगवान् व्यासो रमणीयतामस्य ह्रातुमशक्तः तस्मादनन्तररत्नप्रभवस्य महाभारतस्य पर्वणि पर्वणि रामायणस्य रत्नच्छटा विमलेन ज्योतिषा देदीप्यते । अमृतस्यन्दि-भारतकथायाम् वनपर्वणि रामायणस्य प्रभावातिशयो द्रष्टव्यः । राजपुत्राणां पाण्डवानां वनयापनस्य क्लान्तिर्वनवासिनो रामस्य दुःखेन समतां व्रजति । दुरोदरच्छद्मजिताः पाण्डवा वनवासमङ्गीचक्रुः, रामस्तु विमातुर्निर्दयनिर्देशात् । वनवासं प्रति राज्यलोभ उभयत्र कारणम् । महाभारते दुर्योधनस्य, रामायणे कैकेय्या इति विशेषः । महाभारतेऽपि राक्षसानां प्राचुर्यम् तेषामविरलवधः प्रायः परिदृश्येते । सीतेव द्रौपदी पराक्रमशालिना जयद्रथेनापहृता, मोचिता च पाण्डवैः । यथा रामस्य तथैवात्र पाण्डवानां पत्नीहरणजनितं दुःखं सर्वमपि क्लेशमतिशेते पत्नीहरणे विमानितं पाण्डवपौरुषं समदुःखभागितामन्विष्य सान्त्वनमधिगच्छति । न हि रामादृते कश्चिदन्यः पत्नीहरणसन्तापाद् युगान्तरेऽपि स्मरणीयो जातः । अतो दृश्यते महाभारतस्य वनपर्वणि रामायणस्य नेपथ्यपरिहारः । ज्ञातिच्छलाद् विप्रवासं लब्ध्वा प्रियापहरणजनितशोकाग्निना दह्यमानो राजा युधिष्ठिरो दुःखेन दीर्णहृदयो महर्षिं मार्कण्डेयं पृच्छति—

'अस्ति नूनं मया कश्चिदल्पभाग्यतरो नरः ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि व भवेत् ॥'[1]

---

१. महाभारते वनपर्वणि २७३/१३;

तदाह मार्कण्डेयः—

'प्राप्तमप्रतिमं दुःखं रामेण भरतर्षभ।
रक्षसा जानकी तस्य हृता भार्या बलीयसा॥
आश्रमाद् राक्षसेन्द्रेण रावणेन दुरात्मना।
मायामास्थाय तरसा हत्वा गृध्रं जटायुषम्॥'[१]

चतुःसप्तत्यधिकद्विशततमाध्यायात् एकनवत्यधिकद्विशततमाध्यायान्तमष्टादशाध्यायं व्याप्य रामायणी कथा वनपर्वणि यद्यपि लब्धावसरा तथापि न तत्र सर्वत्राव्यभिचार। रावणादीनां जन्मवृत्तान्तो रामायणं नानुवर्तते। रामायणे रावणकुम्भकर्णविभीषणशूर्पणखाः सोदरा एव। महाभारतीयरामोपाख्याने न तथा। तत्र ते वैमात्रेयाः। किञ्च कुवेरो महाभारते पुलस्त्यस्य पुत्रः, रावणादयस्तु कुवेरद्वेषिणो विश्रवसो रूपं गृह्णतः पुलस्त्यस्य पुत्राः। रामायणे कुवेररावणादयः सर्वे पुलस्त्यसुतस्य विश्रवसः पुत्रा एव। न तत्र कुवेरस्य पितामहानुरक्तिः पितुः पुलस्त्यस्य क्रोधाय सम्पद्यते, यतस्तस्यापि पिता विश्रवा एव। न वा गवि तस्य जन्म सूचितम्। तत्राख्यानमेवमस्ति रामायणे—कृतयुगे पुलस्त्यो नाम ब्रह्मर्षिः प्रजापतिसुतः स्वाध्यायानुरतो गुणेन यशसा साक्षात् पितामह इवासीत्। तपश्चर्यायां विघ्नकारिण्यस्तेन मद्दर्शनमात्रेण गर्भमाप्नुयुरित्यभिशप्ताः। तृणबिन्दुदुहिता ब्रह्मशापमजानती तद् दर्शनाद् गर्भमाधाय पितुरानुकूल्येन तमेव पुलस्त्यमवृणीत। पुलस्त्यप्रसादात् श्रुताध्ययनसम्पन्नं पुत्रं विश्रवसमसूत सा। भरद्वाजकन्या देववर्णिनी तस्य विश्रवसो जायाऽभूत्, यस्यां सर्वथा पित्रनुरूपत्वाद् वैश्रवणो नाम पुत्रो जातः। वैश्रवणस्तु वर्षसहस्राणि तपस्तप्त्वा पितामहात् लोकपालत्वं धनाध्यक्षत्वं पुष्पकं च विमानं लब्ध्वा परितुष्टस्य पितुर्विश्रवसः प्रसादात् लङ्कामध्युवास। तदनन्तरं सुमालीकन्या कैकसी कुवेरस्य वैभवमन्विच्छतः पितुः शासनाद् दारुणायां वेलायां विश्रवसमुपतस्थे। तामाह विश्रवाः—

'दारुणायां तु वेलायां यस्मात् त्वं मामुपस्थिता।
शृणु तस्मात् सुतान् भद्रे यादृशाञ्जनयिष्यसि।
दारुणान् दारुणाकारान् दारुणाभिजनप्रियान्॥
'प्रसविविष्यसि सुश्रोणि राक्षसान् क्रूरकर्मणः॥'[२]

---

१. तत्रैव २७४/१-२

२. रामायणे ७/९/२२-२४

रावणकुम्भकर्णशूर्पणखा विभीषणश्च कैकस्यां क्रमेणाजायन्त । महाभारते कुवेरादीनामुपाख्यानमेवमस्ति— स्वयम्भुवो मानसपुत्रः पुलस्त्यः ।

'तस्य वैश्रवणो नाम गवि पुत्रोऽभवत् प्रभुः ।।'[१]

पितरमुत्सृज्य वैश्रवणः पितामहमनुगच्छन् तस्मादमरत्वं धनेशत्वं लोकपालत्वं कामगेन पुष्पकविमानेन च लङ्कामाप ।

'तस्य कोपात् पिता राजन् ससर्जात्मानमात्मना ।
स जज्ञे विश्रवा नाम तस्यात्मार्धेन वै द्विजः ।
प्रतीकाराय सक्रोधस्ततो वैश्रवणस्य वै ।।'[२]

किञ्च

पुलस्त्यस्य तु यः क्रोधादर्धदेहोऽभवन्मुनिः ।
विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत ।।'[३]

क्रुद्धं तमनुकूलयितुं कुवेरस्तिस्रो राक्षसीः परिचारिकास्तस्मै ददौ याश्च रावणादीनां मातरः । एते विश्रवसः पुत्रा भिन्नमातृका दृश्यन्ते महाभारते—

'पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ ।
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि ।।
मालिनी जनयामास पुत्रमेकं विभीषणम् ।
राकायां मिथुनं जज्ञे खरः शूर्पणखा तथा ।।'[४]

अन्यत्रापि महाभारतीयरामोपाख्याने वृत्तान्तभेदो दृश्यते । इन्द्रजितो निकुम्भिलाया उल्लेखो नास्ति, न वा तद्बाणाभिभूतयोः रामलक्ष्मणयोर्मूर्च्छामपनेतुं हनुमता पर्वतानयनं क्रियते । माययान्तर्हितस्येन्द्रजितो दर्शनाय कुवेरोऽत्र अम्भः प्रेषयति यदाह रामं विज्वरं दृष्ट्वा विभीषणः—

'इदमम्भः कुवेरस्ते महाराज प्रयच्छति ।
अन्तर्हितानां भूतानां दर्शनार्थं परन्तप ।।

---

१. महाभारते, वनपर्वणि २७४/१२
२. तत्रैव २७४/२३-२४
३. तत्रैव २७५/१,
४. तत्रैव २७५/७-०

अनेन मृष्टनयनो भूतान्यन्तर्हितान्युत ।
भवान् द्रक्ष्यति यस्मै च प्रदास्यति नरः स तु ।।'[१]

अनेनाम्भसा नेत्रशौचं कृत्वा सवानरौ रामलक्ष्मणौ अतीन्द्रियाणि चक्षूंषि प्रापतुः । अथाकृताह्निकमिन्द्रजितं लक्ष्मणो जघान । परमयं कुबेरवारिप्रदानात्मको कोऽपि वृत्तान्तो रामायणे नोपलभ्यते । महाभारते वालिपत्नी तारा सर्वभूतरुतज्ञा वर्ण्यते । रुतेन सा सर्वं वेत्ति । तामाह वालिः—

'सर्वभूतरुतज्ञा त्वं पश्य बुद्ध्या समन्विता ।
केन चाश्रयवान् प्राप्तो ममैष भ्रातृगन्धिकः ।।'[२]

रामायणे तारा सर्वभूतरुतज्ञा नासीत् । चारमुखात् श्रुतवृत्तस्याङ्गदस्य वचः श्रुत्वा स सर्वं रामवृत्तान्तमजानात् । अत्र रामशरप्रपीडितः सागरः प्रत्यक्षतां विधत्ते । महाभारते अग्निपवनोज्ज्वलैर्महास्त्रैः सागरं दग्धुमुद्यतो रामः स्वप्ने तन्निर्देशमाप—

'सागरस्तु ततः स्वप्ने दर्शयामास राघवम् ।।
देवो नदनदीभर्ता श्रीमान् यादोगणैर्वृतः ।।'[३]

उभयत्रापि मातलिरथारूढो रामो दशग्रीवं जघान । परं महाभारते रावणदेहस्य ब्रह्मास्त्रज्वलितस्य भस्मावशेषोऽपि न विद्यते—

'शरीरधातवो ह्यस्य मांसं रुधिरमेव च ।
नेशुर्ब्रह्मास्त्रनिर्दग्धा न च भस्माप्यदृश्यत ।।'[४]

रामायणे मृतस्य रावणस्योरसि कश्मलेनाभिपन्ना मन्दोदरी सन्ध्यानुरक्ते जलदे विद्युदिवोज्ज्वला दीप्यते । क्षौमवाससं रावणं सुवर्णशिबिकया पुष्पपताकाभिश्चितां नीतवन्तो विभीषणपुरोगमाः सर्वे ।

'रावणं प्रयते देशे स्थाप्य ते भृशदुःखिताः ।
चितां चन्दनकाष्ठैश्च पद्मकोशीरचन्दनैः ।
ब्राह्मया संवर्तयामासू राङ्कवास्तरणावृताम् ।।'[५]

---

१. तत्रैव २८६/२०-२२
२. तत्रैव २८०/२६
३. तत्रैव २८३/३३
४. तत्रैव २६०/३३
५. तत्रैव रा ६/२२२/३१२-३२३

महाभारते शक्त्याऽऽहतो न दृश्यते लक्ष्मणो न वा सीतां राक्षसशङ्कया भीतां रामनामाङ्कितमङ्गुरीयमदर्शयत् हनुमान् । अविन्ध्यवचनात् सीता तं रामानुचररूपेण ज्ञातुमर्हति । रामसकाशे हनुमानेवं विवृणोति सीतासन्दर्शन-वृत्तान्तम्—

'प्रत्ययं कुरु मे देवि वानरोऽस्मि न राक्षसः ।
मुहूर्तमिव च ध्यात्वा सीता मां प्रत्युवाच ह ।।
अवैमि त्वां हनुमन्तमविन्ध्यवचनादहम् ।।'[1]

रामाङ्गुरीयस्य यद्यपि नोल्लेखस्तथापि सीतायाश्चूडामणिप्रदानं क्रुद्धकाक-कथां प्रत्ययार्थं चोपन्यस्यति कपिप्रवीर इति चित्रम् । महाभारते रावणामात्य-स्याविन्ध्यस्यापि प्रभावो नोपेक्षणीयो यस्तु रामायणे नेदृश उल्लेखावहः । महाभारते तदनुरोधात् त्रिजटा राक्षसी सीतामाश्वस्तां चकार, प्राह सा—

'अविन्ध्यो नाम मेधावी वृद्धो राक्षसपुङ्गवः ।
स रामस्य हितान्वेषी त्वदर्थे हि स मावदत् ।।'[2]

परं रामायणे दुःस्वप्नभीता स्वत एव सीतां समाशश्वास त्रिजटा । मृते रावणे विभीषणपुरस्कृतां सीतामविन्ध्य एव रामसमीपमानीय तस्या ग्रहणमुपादिशत्—

'ततः सीतां पुरस्कृत्य विभीषणपुरःकृताम् ।।
अविन्ध्यो नाम सुप्रज्ञो वृद्धामात्यो विनिर्ययौ ।।'[3]

परमस्मिन् समये रामायणे अविन्ध्यो नोपस्थितः । किं बहुना, महाभारते युधीन्द्रजिति निहते सीतायाः प्राणनाशायोद्यतस्य रावणस्य रोषादविन्ध्य एव सीतां ररक्ष । रामायणे तु तत्काले सुपार्श्वेण रावणात् सीता परिलक्षिता । महाभारते अग्निपरीक्षा नास्ति यामासाद्य रामायणं कारुण्येनावगाहते । रामस्य यदचिन्तनीयं पारुष्यं सहृदयक्षतं जनयति उभयतस्तदविशेषेण यद्यपि दृश्यते तथापि तेजोराशिरिवाचला सीता महाभारते चितां नानुजानाति । प्रियार्हश्रवणा सीता प्रियतमादप्रियं श्रुत्वा गजेन्द्रमर्दितलतेव निपीडिता तीक्ष्णासिधारेव तेजसा चित्तं विदार्य सलक्ष्मणरसिकजनानामेवमादिशति रामायणे—

---

१. तत्रैव १८२/६६-६७,

२. तत्रैव २८०/५६

३. तत्रैव २६२/६,

'चितां मे कुरु सौमित्रे व्यसनस्यास्य भेषजम् ।
मिथ्यापवादोपहता नाहं जीवितुमुत्सहे ॥'[१]

सर्वथा पावकोपमेयमवमानिता पावकमग्निं शरणं मेने ।

'यथा मे हृदयं नित्यं नापसर्पति राघवात् ।
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥'[२]

शपथाचारादनन्तरमखण्डरामायणस्य ह्लादशक्तिरूपा सीता ज्वलनं विवेश—

'सा तप्तनवहेमाभा तप्तकाञ्चनभूषणा ।
पपात ज्वलनं दीप्तं सर्वलोकस्य सन्निधौ ॥'[३]

तदा इन्द्रादिदेवाः सीतायाः शुद्धतां प्रख्याप्य तस्या ग्रहणाय राममादिदिशुः । महाभारते नास्त्येव चिताप्रसङ्गः । दशरथप्रमुखलोकपालानां सविधं सीता शपथमाचरति—

'अग्निरापस्तथाकाशं पृथ्वी वायुरेव च ।
विमुञ्चन्तु मम प्राणान् यदि पापं चराम्यहम् ॥'[४]

ततस्तस्याः पापहीनतामाख्याय पुनर्ग्रहणाय वाय्वादिदेवा राममनुनिन्युः । महाभारते सीतायाश्चिताप्रवेशादर्शनादग्निपरीक्षा रामायणे प्रक्षिप्तेति यदुपदिष्टं पण्डितैस्तदपेशलम् । यतोऽन्यतोऽपि रामोपाख्याने रामायणाद् महाभारतं विद्यते । अयोध्यायां ससीतरामस्य प्रत्यावर्तनादनन्तरं रामाभिषेके महाभारतीयं रामोपाख्यानमवसीयते । महाभारते लोकापवादात् सीताया वनवासो नास्ति, न वा पातालप्रवेशः । परमुत्तरकाण्डमन्तरेण रामायणस्य करुणता दुरवापैव भवति । अतः पाठमात्रेणोत्तरकाण्डस्य प्रक्षिप्तता यद्यपि अनुभवगम्या तथापि रससिद्धये अस्योपयोगिता नूनं स्वीकरणीया, स्वीक्रियते च काव्यरहस्यनिर्माण-चतुरैः कालिदासदिभिश्चिराय । पुनरपि महाभारतस्य वनपर्वणि हनुमद्भीम-संवादे रामोपाख्यानस्य सारः उपलभ्यते । तत्रैव हनुमतोऽमरता प्रख्यापिता ।

---

१. रामायणे ६/१२६/२८
२. तत्रैव, ६/११६/२५,
३. तत्रैव, ६/३२६/३२
४. महाभारते, वनपर्वणि, २६१/२४

सीताप्रसादाद् यथेप्सितं भोगमुपलभते कपिः। महाभारते एकोनशततमाध्याये रामपरशुरामयोरुपाख्यानमस्ति यत्र दाशरथौ रामे विश्वरूपत्वमुपलब्धं भार्गवेण परशुरामेण। रामस्त्वत्र विष्णुरूपेणावतीर्णो भार्गवस्य तेजोनाशमकरोत्। रामवीर्यं जिज्ञासमान ऋचीकनन्दनो भार्गवः क्षत्रियाणां निबर्हणं धनुरादाय अयोध्यामगमत्। दशरथस्तु निर्भीको रामं तत्समीपे प्रेषयामास। धनुषो दिव्यत्वेऽपि विष्णोरेवैतदिति नोल्लिखितं तत्र। रामस्तु रोषाद् भार्गवदर्पनाशाय—

'धनुरारोपयामास सलील इव भारत।
ज्याशब्दमकरोच्चैव स्मयमानः स वीर्यवान्॥'[१]

ततश्च भार्गवो दिव्यं शरं दत्वा तदाकर्षणायादिशत्। मन्युना ज्वलितो रामो भार्गवाय दिव्यं चक्षुः प्रदाय स्वरूपेण तस्थौ—

'ततो रामशरीरे वै रामः पश्यति भार्गवः॥
आदित्यान् सवसून् रुद्रान् साध्यांश्च समरुद्गणान्।
पितरो हुताशनश्चैव नक्षत्राणि ग्रहास्तथा॥
गन्धर्वा राक्षसा यक्षा नद्यस्तीर्थानि यानि च।
ऋषयो बालखिल्याश्च ब्रह्मभूताः सनातनाः॥
देवर्षयश्च कात्स्न्र्येन समुद्राः पर्वतास्तथा।
वेदाश्च सोपनिषदो वषट्कारैः सहाध्वरैः॥
चेतोमन्ति च सामानि धनुर्वेदश्च भारत।
मेघवृन्दानि वर्षाणि विद्युतश्च युधिष्ठिर॥'[२]

रामबाहूत्क्षिप्तो बाणः परशुरामस्य तेजोवधं चक्रे। रामस्त्वत्र साक्षात् विष्णुः प्रतिपद्यते। रामायणे परशुरामो नायोध्यामायातः, न वा स ऋचीकनन्दनः। स तु ऋचीकतनयस्य जमदग्नेः पुत्रः। पितृवधामर्षी क्षत्रद्वेषी क्षत्रियेण दाशरथिना हरधनुषो भङ्गं श्रुत्वा ईर्ष्यान्धः स रामं सद्यः परिणीतमयोध्याप्रत्यावर्तनकाले पथि रुरोध। यद् धनुर्विष्णुसकाशात् प्राप्तं जमदग्निना तदेव दत्वा राममाह—

१. तत्रैव, ६६/५२
२. तत्रैव, ६६/५६–६०

'तदिदं घोरसंकाशं जामदग्न्यं महद् धनुः।
पूरयस्व शरेणैव स्वबलं दर्शयस्व च ॥
तदहं ते बलं दृष्ट्वा धनुषोऽप्यस्य पूरणे।
द्वन्द्वयुद्धं प्रदास्यामि वीर्यश्लाघ्यमहं तव ॥'[१]

दशरथस्तु पुत्रप्राणाशङ्की भार्गवं प्राञ्जलिरनुनिनाय रामस्त्वतुलशौर्य-स्तेनैव धनुःशरेण ब्राह्मणत्वात् भार्गवस्य प्राणान् वर्जयित्वा तपसार्जितान् लोकान् सर्वान् ननाश। रामविक्रमं द्रष्टुं देवादयस्तत्रोपस्थिताः। परं रामशरीरे तेषामवस्थानं नासीद् यद्यपि मधुरिपुत्वेन रामस्तु भार्गवरामेणाङ्गीकृतः। नात्र देवादयो रामस्य देहे दृश्यमाना यथासन् महाभारते। एवं रामोपाख्यानं महाभारते सर्वथा नाविकृतं तिष्ठति यद्यपि वनौकसां पाण्डुपुत्राणां दुःखं रामदुःखेन समतां प्राप्य महाभारतरचयितारं रामायणानुकारिणं क्वचिज्जन-यामास। रामस्मृतिरनेकशो भारतरचयितुश्चिन्तासहचारिणी जाता। रामतीर्थस्य गोप्रतारस्य महिमा स्वत उच्छ्वसितभक्त्या एवं प्रकाशमुपैति—

'गोप्रतारं ततो गच्छेत् सरय्वास्तीर्थमुत्तमम्।
यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः ॥'[२]

वनोषितो रामः शरभङ्गाश्रममगच्छत्। अत्रापि महाभारते वनवासिनां पाण्डवानां शरभङ्गाश्रमस्तीर्थत्वेन गन्तव्यो जातः। रामस्मृतिपूता मन्दाकिनी चित्रकूटेनोपैति श्रवणम्—

'ततो गिरिवरश्रेष्ठे चित्रकूटे विशांपते।
मन्दाकिनीं समासाद्य सर्वपापप्रणाशिनीम् ॥'[३]

ततो रामगुहकसख्यस्मृतिपुण्यं शृङ्गवेरपुरं निर्दिश्यते—

'ततो गच्छेत् राजेन्द्र शृगवेरपुरं महत्।
यत्र तीर्णो महाराज रामो दाशरथिः पुरा ॥
तस्मिंस्तीर्थे महाबाहो स्नात्वा पापैः प्रमुच्यते।'[४]

---

१. रामायणे, १७५.३-४

२. महाभारते, वनपर्वणि, ८४.७०-१

३. तत्रैव, ८५.५८

४. तत्रैव, ८५.६५-६६

अत्र कुम्भकर्णाश्रमोऽपि नोपेक्षितः। रामस्मृतिसौरभवाहिनि वनपर्वणि वनवर्णनायामपि रामायणस्य प्रभावः संलक्ष्यतरः प्रतीयते। वहुपुष्पफलं रम्यं नानाद्विजनिषेवितं[1] द्वैतवनमपि रामायणस्य वनच्छायामवगाहते तत्रापि तमालतालाम्रमधूककदम्बसर्जार्जुनकर्णिकारा मयूरदात्यूहकचकोरकोकिला रामायणादविशेषेण शोभन्ते वनवासिनं रामं सकृदपि न जहाति महाभारत-रचयितुर्मानसम्। अतएव पञ्चविंशाध्याये पुनरपि मार्कण्डेयमुखात् तस्यैव स्मृतिसञ्चारः—

'स चापि राजा सहलक्ष्मणेन
वने निवासं पितुरेव शासनात्।
धन्वी चरन् पार्थ मयैव दृष्टो
गिरेः पुरा ऋष्यमूकस्य सानौ॥'[2]

रमणीयो वनोद्देशः पुनरुपस्थितः अष्टत्रिंशाध्याये कैरातपर्वणि—

'नानापुष्पफलोपेतं नानापक्षिनिषेवितम्।
नानामृगगणाकीर्णं सिद्धचारणसेवितम्॥'[3]

एकमेव वनं रामायणाद्‌हंसकारण्डवोद्‌गीतैः सारसपुंस्कोकिलाभिरुतैः पुण्यशीतामलजलाभिर्नदीभिरिहोपनीतमनुभाति। हिमवत्पृष्ठे एतादृशं वनमाजगामार्जुनः। चित्रकानना पृथिवी उदाररम्यरूपात्रापि सर्वर्तुफलभाराढ्या सर्वर्तुकुसुमोज्ज्वला नित्योत्सवविभूषितेव भाति। रमणीयानि वनोपवनानि मत्तमातङ्गयूथोपसेवितानि मृगमिथुनरोमन्थचर्चितानि महिषवराहशार्दूलदर्पो-द्दामविलासहर्षचकितानि रामायणीयवनविशालतां न सकृदपि मुञ्चन्ति। अत्रापि प्रियासनाथमयूराणां नृत्यैर्गन्धर्वकिम्पुरुषाणां रत्युत्सवैर्मत्तकोकिला-लापैर्लतालिङ्गितपादपैर्धातुरागरुचिरैरभ्रनीलपर्वतैर्वनस्य शोभा तामरसरसा-सवमदिरैः सरोभिर्दावाग्निसदृशैः पुष्पैस्तृप्तेरवसानं न जनयति पर्युत्सु कचेतसाम्। महाभारते वैदूर्यनालशोभितानि काञ्चनपद्मानि कुवेरक्रीडा-स्थाने भीमो ददर्श। तान्येवाविरले दृष्टानि रामायणे उत्तरकुरुवर्णनायाम्। अस्त्रलाभाय गमनोद्यतमर्जुनं येन स्वस्तिवचसा द्रौपदी स्वमनोमाधुर्येणा-पृच्छते—

---

१. तत्रैव, २४.१०
२. तत्रैव, २५/६
३. तत्रैव, ३८/३५

'स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यश्च भारत ।
दिव्येभ्यश्चैव भूतेभ्यो ये चान्ये परिपन्थिनः ॥'[1]

अविकृतप्राया सैवोक्तिः कौसल्यामुखान्निःसरति रामायणे—

'स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यः पुनः पुनः ।
सर्वेभ्यश्चैव देवेभ्यो ये च ते परिपन्थिनः ॥'[2]

नवजातं कर्णं विसृजन्त्या दुःखोपहतायाः कुन्त्याः स्वस्त्युच्चारणेऽपि रामविरहार्तचेतसः कौसल्यायाः स्वस्तिभाषणं क्वचिदुपलभ्यते । "नास्त्यचौरः कविजनो नास्त्यचौरो वणिग्जनः ।" कविचौर्यमत्र साहसे पर्यवस्यति दमयन्त्या रूपवर्णनायाम् । हनुमद्दृष्टसीतया सर्वथा समाना सुदेवदृष्टा दमयन्ती । वर्णनायां पङ्क्तिगतभेदोऽपि कुत्रचित् प्रत्याख्यात एव । द्वयोरेवासामान्यं रूपं वर्णनया समानं प्रतिपद्यते । अशोकवनिकायां सीतां दृष्ट्वा हनुमान्—

'तां विलोक्य विशालाक्षीमधिकं मलिनां कृशाम् ।
तर्कयामास सीतेति कारणैरुपपादिभिः ॥'[3]

चेदिपुर्यामल्पपुण्येन नलेन परित्यक्तां वैदर्भीं दमयन्तीं दृष्ट्वा सुदेवोऽपि तर्कयामास—

'तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ।
तर्कयामास भैमीति कारणैरुपपादयन् ॥'[4]

सीतेव दमयन्ती धूमजालेन निबद्धा विभावसोः प्रभेव मन्दं रूपेण प्रख्यायमाना सुदेवो ददर्श दमयन्तीम्—

'पूर्णचन्द्रनिभां श्यामां चारुवृत्तपयोधराम् ।
कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः ॥
चारुपद्मविशालाक्षीं मन्मथस्य रतीमिव ।
इष्टां समस्तलोकस्य पूर्णचन्द्रप्रभामिव ॥'[5]

---

१. तत्रैव, ३७/३५
२. तत्रैव, २/२५/२२
३. रामायणे, ५/३५/२६-२७
४. महाभारते, वनपर्वणि, ६८/६
५. तत्रैव, ६८/११-१२

हनुमान् सीतामेवं ददर्श—

'पूर्णचन्द्राननां सुभ्रूं चारुवृत्तपयोधराम् ।
कुर्वतीं प्रभया देवीं सर्वा वितिमिरा दिशः ॥
सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा ।
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥'[१]

सुदेवो दमयन्तीमेवं ददर्श—

'विध्वस्तपर्णकमलां वित्रासितविहङ्गमाम् ।
हस्तिहस्तपरामृष्टां व्याकुलामिव पद्मिनीम् ॥
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
दह्यमानामिवार्केण मृणालीमिव चोद्धृताम् ॥'[२]

सुन्दरकाण्डे रावणस्तु वैदेहीमेवं ददर्श—

'उत्कृष्टपर्णकमलां वित्रासितविहङ्गमाम् ।
हस्तिहस्तपरामृष्टामाकुलामिव पद्मिनीम् ॥
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ॥'[३]

सीतां दृष्ट्वा हनुमानेवं चिन्तयामास—

'कामभोगैः परित्यक्ता हीना बन्धुजनेन च ।
धारयत्यात्मनो देहं तत्समागमकाङ्क्षिणी ॥
भर्ता नाम परं नार्याः शोभनं भूषणादपि ।
एषा हि रहिता तेन शोभनार्हा न शोभते ॥'[४]

सुदेवस्तु दमयन्तीं दृष्ट्वा एवं चिन्तयामास—

'कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च ।
देहं धारयतीं दीनं भर्तृदर्शनकाङ्क्षया ॥
भर्ता नाम परं नार्या भूषणं भूषणैर्विना ।
एषा हि रहिता तेन शोभमाना न शोभते ॥'[५]

---

१. रामायणे, ५/१५/२८-३०
२. महाभारते, वन०, ६८/१५-१६
३. रामायणे, ५/१६/१५-१७
४. तत्रैव, ५/१६/२४-२६
५. महा०, वन०, ६८/१८-१९

सुदेवेन भर्ता भूषणरहिताया भूषणमिति स्वीक्रियते, हनुमता तु भूषणादपि शोभनं भर्तेत्यनयोः कल्पनागतभेदः। तदनन्तरं कपेरियं चिन्ता—

'दुष्करं कुरुते रामो हीनो यदनया प्रभुः।
धारयत्यात्मनो देहं न दुःखेनावसीदति॥
इमामसितकेशान्तां शतपत्त्रनिभेक्षणाम्।
सुखार्हां दुःखितां ज्ञात्वा ममापि व्यथितं मनः॥'[१]

रामनाम वर्जयित्वा सुदेवस्यापि इयमेका चिन्ता—

दुष्करं कुरुतेऽत्यन्तं हीनो यदनया नलः।
धारयत्यात्मनो देहं न शोकेनापि सीदति॥
इमामसितकेशान्तां शतपत्त्रायतेक्षणाम्।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः॥'[२]

रामो यथा राज्यभ्रष्टो नैषधोऽपि तथा। द्वावपि तौ स्त्रीवियुक्तौ। किं बहुना, असितेक्षणा दमयन्तीव सीता रामस्य समुचिता भार्या। अतश्चिन्तयामास सुदेवो वैदर्भीं दृष्ट्वा—

'अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति।
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वा च मेदिनीम्॥
तुल्यशीलवयोयुक्तां तुल्याभिजनसंवृताम्।
नैषधोऽर्हति वैदर्भीं तं चेयमसितेक्षणा॥'[३]

नामादिकं वर्जयित्वा हनुमतोऽपि अयमेकः सिद्धान्तः —

'अस्या नूनं पुनर्लाभाद् राघवः प्रीतिमेष्यति।
राजा राज्यपरिभ्रष्टः पुनः प्राप्येव मेदिनीम्॥
तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्।
राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा॥'[४]

---

१. रामायणे, ५/१६/२७-२८
२. महाभारते, वन०, ६८।२०-२१
३. तत्रैव, ६८/२३-२४
४. रामायणे, ५/१६/२३

एवं दमयन्तीवर्णनायां चौर्यं शौर्यं मन्यमानः कविः कल्पनाजनितं क्लेशं नाङ्गीचक्रे। रामायणस्यैतादृशः साक्षात् प्रभावो न कुत्रापि संस्कृतसाहित्ये परिदृश्यते। प्रत्यक्षप्रभावं वर्जयित्वा रामायणस्यालक्ष्यप्रभावोऽपि महाभारतस्य वनपर्वणि न विरलप्रायतां याति। माया-सीताया मायारामस्य चासकृद् वधो रामायणे दृश्यते। महाभारतेऽपि सौभशाल्वेन यदा कृष्णो युद्धरतस्तदा माया-वसुदेवस्य वधस्तमवशं चकार। धर्मव्याधस्य मुखाद् रामायणस्य श्लोक एवा-विकृतेन स्वरूपेणावतरति—

'न विषादे मनः कार्यं विषादो विषमुत्तमम्।
मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः॥'[१]

रामायणे कैकेय्या विशेषणमुपलभ्यते 'मूढा पण्डितमानिनी।' महाभारतेऽपि गुरुद्वेष्टार एवं निर्दिश्यन्ते—

'गुरूंश्चैव विनिन्दन्ति मूढाः पण्डितमानिनः॥'[२]

महाभारते पिनाकपाणिर्गिरिर्मेरुरिवापरो विशालतां समश्नुते। इयमुपमा रामायणादाहृता। तत्र पुष्पाच्छन्नो रावणो नक्षत्रमालामण्डितमेरुरिव शोभा-तिशय्यं जनयति—

'अभ्यवर्तत पुष्पाणां धारा वैश्रवणानुजम्।
नक्षत्रमाला विमला मेरुं नगमिवोन्नतम्॥'[३]

उभयत्र शरा आशीविषोपमास्तीक्ष्णाः। महाभारते अर्जुनः सुकुमारः सुखोचितः रामायणे मैथिली सुकुमारी सुखोचिता।[४] रामरावणयोर्युद्धे—'चकम्पे मेदिनी कृत्स्ना सशैलवनकानना।'[५] महाभारते इन्द्रयमवायुवरुणादिदेवैर्वेत्तम-शक्यस्य पाशुपतास्त्रस्य प्रदानसमये—'ततश्चचाल पृथिवी सपर्वतवनद्रुमा।'[६]

---

१. तत्रैव, ५/२१६/२४
२. महाभारते, २०८/३७
३. रामायणे, ३/५२/२८
४. महाभारते, वनपर्वणि, ३६/२५, रामायणे, २/६१/४
५. रामायणे, ६/२०७/४७
६. महाभारते, वन०, ४०/२२

राम इवार्जुनो राजीवलोचनः ।[१] सोऽपि तिष्ठति द्योतयन्निव भास्करो[२] यथा रामः । दमयन्याः स्वयंवरसभायां राज्ञां वाहवः पञ्चशीर्षा उरगा इव शोभन्ते—

'तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः ।
आकारवर्णसुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः ॥'[३]

पञ्चशीर्षपन्नगो यद्यपि नाधुना विद्यते सीतापि विभीषणेनानेनोपमिता पञ्चाङ्गुलीवशात्—

'पञ्चाङ्गुली पञ्चशिरोऽतिकायः ।
सीता महाहिस्तव केन राजन् ॥'[४]

नारीरूपस्य तुलनाराहित्यं "रूपेणाप्रतिमा भुवीति" निरलंकृतेन वचसा यथा रामायणे तथैव महाभारते चारुत्वातिशयं पुष्णाति । उभयतः कुररीव क्रोशन्ती नायिका समुपलभ्यते । सीता यथा शपते—

'यथाहं राघवादन्यं मनसापि न चिन्तये ।'[५]

तथैव दमयन्ती शपन्ती तिष्ठति—

'यद्यहं नैषधादन्यं मनसापि न चिन्तये ।'[६]
'राम इव पाण्डुतनयो भीमो जगाम मनसा प्रियाम् ।'[७]

विरहे निसर्गादेव सान्त्वनमन्विष्यते । शोकापनोदनशीलोऽशोकः काव्यद्वये दुःखार्तानामविशेषेणाश्रयो भवति । सीताविरहितो रामस्तमनुनयति--

'अशोक शोकापनुद शोकोपहतचेतनम् ।
त्वन्नामानं कुरु क्षिप्रं प्रियासन्दर्शनेन माम् ॥'[८]

---

१. तत्रैव, ४२/४१
२. तत्रैव, ४२/३०
३. तत्रैव, ५७/६
४. रामायणे, ६/१४/२
५. तत्रैव, ७/६७/१४
६. तत्रैव, ६३/३८
७. तत्रैव, २५२/१४
८. तत्रैव, ३/६०/१७

पतित्यक्ता शून्यहृदया दमयन्ती नलदर्शनाशया शोकोच्छेदमशोकादन्विच्छति--

'यथा विशोका गच्छेयमशोकनग तत् कुरु ।
सत्यनामा भवाशोक अशोकः शोकनाशनः ॥'[१]

द्वयोर्महाकाव्ययोर्नायिका 'चन्द्रलेखेव शारदी' रूपार्चिषा दिशो वितिमिरा जनयति । परं प्रथमत ईर्ष्यादिमालिन्यमुक्ता कैकेयी रामाभिषेकवार्तां श्रुत्वा हर्षे परिपूर्णा यथानयोपमया शोभते न तथा सुखसौभाग्यहीना पतित्यक्ता निराश्रया दमयन्ती । निर्जनारण्ये येषामियं दमयन्ती आश्रिता हस्तियूथेन तेषामपि प्रणाशे जाते संस्कारवशादियमुपमा रामायणादाहृता नौचित्यमनुमन्यते--

'हतशेषैः सह तदा ब्राह्मणैर्वेदपारगैः ।
अगच्छद् राजशार्दूल चन्द्रलेखेव शारदी ॥'[२]

किन्तु हर्षोच्छला कैकेयी चन्द्रकलेव रुचिरा समधिकं दृष्टिचित्तापहारिणी--

'मन्थराया वचः श्रुत्वा शयनात् सा शुभानना ।
उत्तस्थौ हर्षसम्पूर्णा चन्द्रलेखेव शारदी ॥'[३]

रामायणे दशरथः --

'पुत्रद्वयविहीनं च स्नुषया च विवर्जितम् ।
अपश्यद् भवनं राजा नष्टचन्द्रमिवाम्बरम् ॥'[४]

महाभारते अर्जुनराहित्ये भीमस्य सर्वं तिमिराच्छन्नमनुभूतम्—

'तमृते पुरुषव्याघ्रं नष्टसूर्यमिवाम्बरम् ।'[५]

रामायणे सीताकुलललामभूता—

'कृतकृत्या हि वैदेही छायेवानुगता पतिम् ।
न जहाति रता धर्मे मेरुमर्कप्रभा यथा ॥'[६]

---

१. तत्रैव, ६४/२०७
२. तत्रैव, ६५/४४
३. तत्रैव, २/७/३२
४. तत्रैव, २/४२/३०
५. तत्रैव, ८०/१६
६. तत्रैव, २/४०/२४

महाभारते सहस्रसिंहसञ्चालितहररथस्य वाहकाः पिबन्त इवाकाशं दृप्तेन गरिम्णा राजन्ते—

द्रौपद्याश्चैवं महिमाऽविशेषेण वर्तते—

'यथा च वेदान् सावित्री याज्ञसेनी तथा पतीन् ।
न जहौ धर्मतः पार्थान् मेरुमर्कप्रभा यथा ॥'[१]

अग्निना तूलराशिदहनोपमा महाकाव्यद्वये लब्धावसरापि रामायणे यथा समुचितसन्निवेशमधिगच्छति न तथा महाभारते लक्ष्मणादीन् प्रति सरोषं स्वशक्तिमदेन दर्पाभिभूत इन्द्रजिदेवमाह—

'अद्य वो मामका बाणा महाकार्मुकनिःसृता ।
विधमिष्यन्ति गात्राणि तूलराशिमिवानलः ॥'[२]

कोमलगात्रदहने बाणानामनलोपमोपयुज्यत एव । परं धनञ्जयविरहाग्निर्युधिष्ठिरस्य कोमलं गात्रं तूलराशिमिव दहतीत्युपमा चमत्कृतिर्वर्जिता वागाडम्बरमेव जनयति, न तु यथोचितभावानुषङ्गम्—

'तन्मे दहति गात्राणि तूलराशिमिवानलः ।
यच्च वीरं न पश्यामि धनञ्जयमुपान्तिकात् ॥'[३]

रामतेजः सुग्रीवमनसि भस्माच्छन्नानलमिव प्रतिभाति । परं महाभारते द्रौपदीं हर्तुकामो 'ब्राह्मणो मन्त्रकुशलः सर्वशास्त्रविदुत्तमः' इति ब्रुवन् जटासुरः कविमनसि भस्माच्छादितो वह्निरिव प्रतिभाति । सीताहरणाय रावणः "सहसा भव्यरूपेण तृणैः कूप[४] इवावृतस्तामुपावर्तत । नूनमिममेव दृष्टान्तं हृदि निधाय प्राह धर्मव्याधः —

'अधर्मा धर्मरूपेण तृणैः कूपा इवावृताः ।'[५]

रामायणे हनुमतस्तेजोदृप्तविशालता तमाकाशपिपासुं जनयति—

'पिपासुरिव चाकाशं ददृशे स महाकपिः ।'[६]

---

१. तत्रैव, ८१/५
२. तत्रैव, ६/८८/७
३. महाभारते, वनपर्वणि, १४१/३
४. रामायणे, ३/४६/१०
५. तत्रैव, २०७/५६
६ तत्रैव, ५/१/५७

'ते पिबन्त इवाकाशं त्रासयन्तश्चराचरान् ।
सिंहा नभस्यगच्छन्त नदन्तश्चारुकेसरा: ।।'[१]

द्वयोरपि महाकाव्ययोर्योद्धा रणक्षेत्रे म्रियमाणश्छिन्नमूल इव द्रुमो भूमौ पतति । सीता श्रीरिव रूपिणी ।[२] नयनाभिरामा सावित्री सीतेव सतां मनोबुद्धिहारिणी । अस्याश्च श्रीरिव रूपिणीत्युपमा श्रियं संवर्धयति । पतिशोकातुराया हृदयमसकृद्रामायणे अश्मसारमयतामेति । रामबाणनिहतं भर्तारं दृष्ट्वा ताराया विलापः —

'अश्मसारमयं नूनमिदं मे हृदयं दृढम् ।'[३]

महाभारते यक्षरूपिणो धर्मस्य प्रश्नोत्तरदाने असमर्थानां सरसो जलं पिबतां भ्रातृणां गतप्राणान् देहानालोक्य युधिष्ठिरस्यापि मर्मच्छेदी सन्तापः —

'अश्मसारमयं नूनं हृदयं मम दुर्हृदः ।
यमौ यदेतौ दृष्ट्वाद्य पतितौ नावदीर्यते ।।'[४]

एवं रामायणोद्गतोपमा शैलूषीव महाभारते नरीनृत्यमाना रसिकानां चेतो यद्यपि समाकर्षति तथापि नेयं सर्वत्र सुन्दरी प्रतीयते ।

वनपर्वणि रामायणस्याविरलसञ्चारः सुधियामनुभवेन प्रायः स्पष्टतामेति । अत्रोपमागतमाख्यानगतं वर्णनागतं च रामायणसादृश्यं नैवानृण्यं घोषयति महाभारतस्य प्रवक्तुर्व्यासस्य । अतो महामहिमशालिनो व्यासादपि वाल्मीकिर्गरीयान् प्रतिपद्यते यस्यापूर्ववस्तुनिर्माणोज्ज्वलप्रज्ञया भारतभावदीपश्चिराय प्रज्बलितः । किं बहुना, राज्यभ्रंशवनवासपत्नीहरणादिका रामायणे दृष्टपूर्वा एवैते विषया महाभारतस्य वनपर्वणि नवरसपरिग्रहात् मधुमासे द्रुमा इव पुनः सञ्जातपत्रा नूतनतराः सन्तो हृदयोत्सवं तन्वन्ति सर्वसामाजिकानाम् । साधूक्तमानन्दवर्धनेन —

'दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात् ।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ।।'[५]

—०—

१. तत्रैव, २३१/३०-३१
२. तत्रैव, २६३/२६
३. तत्रैव, ४/२३/१०
४. महाभारते, वन०, ३१३/१३
५. ध्वन्यालोके, ४/४

आचार्य शारदाचरणदीक्षितः
आगरा

# कवितात्रयी

## १. दिनानि तानि

परिम्लानो मानस्तनुरपि तनुस्ताम्यतितराम् ।
मनो मोहावर्त्ते भ्रमति धृतिरस्तं व्रजति च ॥
कथापि क्लेशानामवतरति नोच्छेदपदवीम् ।
दवीयस्यामस्यां भव भुवि मुधा धावति मतिः ॥१॥

गोपालचन्द्रगुणगौरवगर्जितानि,
प्रागय्यर-प्रतिभया प्रभयाऽभयानि ।
सत्यव्रतव्रततितिव्यवसायितानि,
हा ! हन्त ! सम्प्रति गतानि दिनानि तानि ॥२॥

साहित्यरीतिरसरङ्गतरङ्गितानि,
वाणीविलासविलसत्परिषद्वलानि ।
गोपालचन्द्रचरणावलिवल्गितानि,
हा ! हन्त ! सम्प्रति गतानि दिनानि तानि ॥३॥

उद्वेल्लितत्रिदशवाङ्मयसागराणि,
प्रत्येकवत्सरपुरस्कृतपण्डितानि ।
मर्मज्ञसंस्कृतकविप्रतिभाञ्चितानि,
हा ! हन्त ! सम्प्रति गतानि दिनानि तानि ॥४॥

## २. पाकेऽचिरं रुचिरे रुचिरेक्षणानि

सम्बन्धबन्धनविधानविधिव्रतानि,
राजीवराजिविरजीकृतहृन्मलानि ।
श्रीबेनजीरजरदारिदरापहानि,
पाकेऽचिरं रुरुचिरे रुचिरेक्षणानि ॥१॥

निस्तन्द्रपुरस्करतिरस्करणक्षमानि,
स्रस्तावगुण्ठनपटप्रभया भयानि ।
वक्त्रश्रिया विकसितानि विकस्वराणि,
पाकेऽचिरं रुरुचिरे रुचिरेक्षणानि ॥२॥

अन्योऽन्यसङ्कुलसच्छुकसारिकाणि,
वासज्जितानि सुरभीणि मनोहराणि ।
मोहम्मदीयमदिरामदिरायितानि,
पाकेऽचिरं रुरुचिरे रुचिरेक्षणानि ॥३॥

अभ्यर्हितान्यभिहितानि हिताहितानि,
प्राचामपास्य नवनीतिविनिर्मितानि ।
उन्मीलितानि मिलितानि परस्पराणि,
पाकेऽचिरं रुरुचिरे रुचिरेक्षणानि ॥४॥

प्रत्यक्षवक्षपरिलक्षितलक्षणानि,
निर्मत्सराणि मिथुनीकृतमानसानि ।
दूरीकृतानि दुरितान्युदरीकृतानि,
पाकेऽचिरं रुरुचिरे रुचिरेक्षणानि ॥५॥

वैदुष्यकारिवितथीकृतबन्धनानि,
सस्नुः ययुर्मुहुरनेबिजुरन्तराणि ।
प्रात्याहिकप्रणयबन्धनबन्धुराणि,
पाकेऽचिरं रुरुचिरे रुचिरेक्षणानि ॥६॥

## ३. चीनयात्राप्रसङ्ग

कैलासमानसरमानसमुज्जिहानां
सीमामतीत्य महतीमपचीयमानाम् ।
चैनैरना जुहुविरेऽप्यनुरुध्यमाना
ते चीनवर्त्मनि विचक्रमिरे विमानाः ॥१॥

निर्याणयानपरिपन्थिपरीयमाणाः
यानात्परैः परिजनैरथ तार्यमाणाः ।
ते चीनयूथपतिमन्दिरमाजिहानाः
बिभ्युस्त्रिविष्टपमनिष्टपदं ब्रुवाणाः ॥२॥

प्रत्यन्तनन्तमधिगन्तुमरिन्दभत्वं
नाभाजि नैजिकमभाजि वलत्रभत्वम् ।
शान्तिप्रियेण विनयावनतेन तेन
गत्दूनदूनमतिना मतिना हतेन ॥३॥

हा ! हन्त ! हन्त ! हतवन्तमयासयन्तं
पैतामहं परिभवं परितो वहन्तम् ।
तत्पञ्चशीलमनुशीलयितुं व्रजन्तं,
किं व्याहराम्यकथया कथया भवन्तम् ॥४॥

## वंशस्थे

नवं नवं नैह्लवमुन्नधित्सुना—
मुनाधुनाधायविधूतवर्त्मना !
मतीय सीमानमतीय विष्ठरात्
त्रिविष्टपोऽपि प्रयये प्रबन्धनात् ॥५॥

ज्वलत्यदो मे हृदयं त्रपातपात्
कियत् सहिष्ये नहि मृत्युरस्ति हा !
स्वपाणिना साध्वसबद्धवाणिना
किमीप्सितं ते विदधेऽभिधेहि मे ॥६॥

महामहापायमही महीयसी
त्रपामपाकृत्य निभान्निभालय ।
निजैनसः सन्तमसागसः कथा
दुनोत्यदः श्रोत्रपथं कथं न ते ॥७॥

अरुन्तुदं वृत्तमिदं तु दन्तुरं
विदन्तु तेऽपत्रपिनो धरा-धवाः ।
प्रजापवादव्यसनाय नायकः
प्रजाननेकः करमर्पपत्यदः ॥८॥

अनिह्नुतीकृत्य यथाभ्यधामहं
हितावहं प्रत्ययमेव प्रत्यहम् ।
तथाप्यपाये परिमोहिनीव हा !
न ते मतिस्तेभति किन्न दुष्क्रियम् ॥९॥

पदे पदे प्रत्ययभिन्नतानता
न ता भवद्भावनया विधानता ।
ततोऽपि हा ! हन्त ! हतप्रकाशिकां
जहासि नाद्यापि मृषा सुखासिकाम् ॥१०॥

सहेऽहमेव कियतीः कदर्थना—
स्त्वदर्थमर्थापयितुं समर्थनम् ।
सहायकृष्टैर्महतां महात्मना—
मिवात्मनां सङ्गतमौज्झ्य सर्वथा ॥११॥

ह्रियं समुज्झित्य विजित्य विप्रियं
श्रियं समाधाय महीभृतामिव ।
दुरन्तमुज्झापयितुं परन्तपः
ततः प्रतस्थेऽपरवर्त्मनात्मना ॥१२॥

अहो ! अहो ! भाग्यमिदं हि केवलं
बलं बलीकृत्य बलीयसामसौ ।
उदीरयामास समासमासनात्
तदीयमुत्कोचपथं यथायथम् ॥१३॥

असावनन्यप्रभयाभयी भवान्
'विधाय वोफोर्स' निकायनैह्नवम् ।
निधाय नैपुण्यमपुण्यवर्त्मना
मनागिवोत्कोचपथं व्यपीपुथत् ॥१४॥

—०—

डॉ० परड्डी मल्लिकार्जुनः
धारवाड़

## मानवधर्मः

कायिकं हिंसनं वाचिकं हिंसनं
सर्वदा निन्दितं मानसं हिंसनम् ।
प्राणिहिंसारतिर्नारकी दुःस्थितिः
पापयोनौ पुनः पातयेद् दुर्मतिम् ॥ १ ॥

सत्यवाग्यो नरो देवतुल्यो भुवि
मोदते मुक्तदेहः सदा वा दिवि ।
तद्यशो गीयते सर्वलोकैर्यदा
मृत्युमप्येत्य जीवेन्मनुष्यः सदा ॥ २ ॥

यस्य वा कस्य वा संपदं लौकिकीं
वीक्ष्य तत्स्तेयबुद्धिर्नरो नो भवेत् ।
शम्भुना यद् धनं दीयतेऽलौकिकं
तच्छिवायार्पयित्वा नरैर्भुज्यताम् ॥ ३ ॥

ब्रह्मचर्यं नरैर्दैहिकं मानसं
स्वीयभार्यारताद्वा सदा पाल्यताम् ।
शम्भुपादद्वयध्यानपूजादिकं
प्राणिवर्गे दया दीनलोके क्षमा ॥ ४ ॥

भूतसौख्ये रतिर्देहभावे मितिर्--
आत्मभावे मतिः शम्भुपादे नतिः ।
सज्जनानां नुतिः दुष्टबुद्धिक्षतिः
सर्वमेतन्न यस्यास्ति तद् दुर्मतिः ॥ ५ ॥

वेदवेदान्तवाक्यैः सदा घोषितः
धार्मिकैर्दर्शनाढ्यैः सदा पोषितः ।
लौकिकः पारमार्थः समं ज्ञायतां
एष धर्मः सदा मानवैः सेव्यताम् ॥ ६ ॥

—०—

**विश्वनाथमुखोपाध्यायः**
वर्धमान

# महाभारतम्

कमलासनः स्रष्टा तथा कविरपि—'कविर्मनीषीस्वयम्भू'रिति श्रुतेः (ईश-८)—उक्तश्च 'एकोऽभून्नलिनात् ततश्च पुलिनात् वल्मीकतश्चापरः''—इति ।

कवेः कर्म काव्यमतः तत्सृष्टं जगदपि तस्य परमेश्वरस्य काव्यमेव । परं व्यासवाल्मीकिमुन्योश्चेत् महाकवित्वं काव्ययोश्च तयोर्महाकाव्यत्वम्, महामहाकविस्तर्हि पितामहः, काव्यमपि महामहाकाव्यमिति नादरणीयं वचः । भवतु चतुराननस्य काव्यस्याध्ययनमद्यापि नावसितम् । प्रतियुगं परावरे लब्धदृष्टयो मेधाविनो जगत्काव्याध्यापननिपुणाः काव्यान्तरप्रणयनपराः कवय आविर्भवन्ति नाम तथापि सावशेषं विश्वकाव्याध्ययनमिति । 'को वेद—एकोऽहं वहु स्याम' इत्यभिलषितुरीशस्य वहुत्वं कियत्प्रसरं गतिमतो जगत्काव्यस्य वा कतिसर्गाः ।

ननु काव्यं कवेः प्रीतिमातनोति । सद्यःपरनिर्वृतिरस्ति काव्यस्य परमं प्रयोजनमिति । तर्हि जगन्निर्मातुरपि जगत्काव्यं निर्मायास्ति कापि परमिका प्रीतिरिति निःसन्दिग्धं क्रमः । सत्यं—'आनन्दाध्येव खल्विमानि भूतानि जायन्ते'—इत्याद्युपनिषदुक्तिरप्यस्ति ।

सत्यं सच्चिदानन्दानुध्यानपरायणा बभूवुरादित एवास्माकं ऋषयः । भारतीयसंस्कृतिरादित एवाऽऽहिमालयात् जह्नुकन्याप्रवाहवद् ऋग्वेदादिरूपा काव्यकलेवरा नितरां कल्लोलमुखरा प्रचलतिनाम । ऋषयोऽपि कवय उच्यन्ते वेदादिषु । ब्राह्मणादावपि विश्वसृजामयनमित्याद्यभिहितं सत्वं स्रष्टारमेव

मनुते । उत्तरकालेऽपि महाभारतमहाकाव्यनाम्नाऽपि तदेव परामृश्यते । भरत-नृपतिकीर्तिपूता भारतभूमिरपि काव्यमूर्त्तिधरैवाभाति । सत्यं रामचरितमाश्रित्य यथा रामायणम् तथा कृष्णकथामवलम्ब्य महाभारतमहाकाव्यस्यापि कृष्णायनमित्यपि नाम भवितुमर्हति । अत्रैव 'वेदान्तसारभूतायां गीतायामर्जुनोक्तिः—"स्थाने हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च" विशेषेणोल्लेखमर्हति । तस्मात् न केवलं भरतनृपतिकीर्तिस्मरणाय जगत्कर्तुः काव्यानुशीलनव्याजेनापि स्वकीयंमहाकाव्यं महाभारतमिति नाम्ना व्यपदिशति व्यासमहर्षिः । अतः कृष्णगौरवप्रचारप्रचुरे महाकाव्येऽस्मिन् आर्यावर्तगौरवख्यापनमेव महर्षिणा व्यासेनाकारि । उक्तञ्च—"भरतानां महज्जन्म तस्मात् भारतमुच्यते" (स्वर्गा० ५।८) । सत्यं भरतजनमङ्गलायादित एव भारतीया मुनयो ध्यानपरा आसन्—तथा च स्मर्यते—"विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम्" (ऋग्वेद ३।५३।१२)—इति । भरतशब्दस्य ऋत्विजित्यर्थान्तरमप्यस्ति—का कथा या हि वेदजननी साऽपि भारतीति कथ्यते । ब्राह्मणादौ यज्ञपतिरूपेण सूयते विष्णुस्तस्यैव प्रकाशः कृष्णरूपेण महाभारतकाव्ये इत्यविसंवादितमेव । अतएव यथा यज्ञपतिमुपेयुषामखिलऋत्विजामासीत् पुरा यज्ञसन्ततिस्तथेहापि केशवं ध्यायन्त राजन्ते भारतीयाः । सैषा प्राचीना संस्कृतिरिदानीमपि निरवच्छिन्ना प्रवहतीति परं जयतां जयाख्यं महाभारतंनाम महाकाव्यमिति ।

—०—

डॉ० पुत्तूलाल शुक्ल 'चन्द्राकर:'
लखनऊ

# श्रीगङ्गाष्टकम्

चिद्रूपाप्यवतारिता भगवती, भागीरथी जाड्यतां
शम्भोर्दिव्यपदं ददाति जननी, बिन्दोर्लवस्पर्शनैः ।
धुन्वाना कलुषं जगन्निवसतां, चित्तं पुनाना पुनर्
मूलं ब्रह्मपदं सुखं विदधती, भक्ताऽनुरक्ताञ्जनान् ॥१॥

ब्रह्माणं परिशङ्कते त्रिनयनं संवेगलोलायते
गौरीं रोषयतेऽनुरागनिलयं विष्णुञ्च कम्पायते ।
दिकपालान् त्रसते गजान् विरसते भूमिञ्च संत्रासते
गङ्गाध्वध्वननं सुरेन्द्रसदनं वेगेन विध्वंसते ॥२॥

शम्भोः शीर्षविनर्त्तिता हिमसुता हारावली शोभिता
चञ्चच्चन्द्रकरानुवर्त्तनलता, पुष्पावली पुष्पिता ।
सिन्दूरीकृतदिग्वधूकुचकुलं, प्रत्यूषकाले परं
सा सौभाग्यविधायिनी कुलबधूः शोभारुणा सर्वदा ॥३॥

नाना वर्णविभूषिता प्रमुदिता शस्यैः सदा श्यामला
पक्वानैः कलमैः प्रभूतनमितैर्देदीप्यमाना कृता ।
उल्लासेन तरङ्गिता विहरिता, सन्नर्त्तने झंपिता
गङ्गावारितरङ्गपीतधरणीनृत्याङ्गना शोभते ॥४॥

आरोग्यञ्च बलं ददाति सुचिरं स्नानेन पानेन यत्
पीयूषाधिकमिष्टपानसुखदं दिव्यं जलं निर्मलम् ।
इन्द्राद्याः सुरदेवतासमितयो मन्दाकिनीमार्जनं
यत्कुर्वन्ति विहाय देवभुवनं, तत्ते महत्त्वं महत् ॥५॥

या ज्योत्स्नोज्ज्वलशाटिकाम्बरयुता चिन्ताकुला प्रेमिका
या नौकल्पितकल्पना विहरणा, काङ्क्षीकृता रेणुका ।
शय्यासैकतशोभनाऽल्पवसना, पर्णोपधाना च सा,
तन्वङ्गी तरुणीव चन्द्रनिकरे, गङ्गा शयानाऽयना ॥६॥

स्वास्थ्यं देहि मनोज्ञयज्ञसुफलं, सत्कर्मसंसाधनं
लक्ष्मीं देहि परोपकारनिरतां, गङ्गे ! शुभाङ्गे ! शिवे ।
पत्नीं देहि मनोरमां कुलभवां, संसारसिन्धोस्तरीं
पुत्रान् देहि नरेन्द्रसेवितपदान्, विद्वज्जनैर्वन्दितान् ॥७॥

यन्त्रोद्योगविसर्जितं मलभरं द्रव्यैर्विषाक्तैः परं,
पापौघं नववृत्तसृष्टिविपुलं, दिव्यं जलं दूषितं
विज्ञानान्धमनुष्यनिन्द्यकृतकं, विद्याबुधैर्धिक्कृतम् ।
मातस्तत् परिमार्जनन्तु भविता कारुण्यके ! क्षम्यताम् ॥८॥

यः शुक्लास्पदकीर्त्तितस्सुरधुनीशुक्लत्वतीर्णो भुवि--
प्राकट्येन च शीतलाहिमगिरेर्जातः प्रसन्नाननः ।
छन्दःशास्त्रविशारदश्च सुकविः काव्यैकरत्नाकरो
गङ्गाकाव्यमिमं मुदं रचितवान्, वागीन्द्रचन्द्राकरः ॥९॥

—०—

**डॉ० बिन्दाप्रसाद मिश्र:**
लखनऊ

# आधुनिक-विज्ञान-सम्मतं फलितज्यौतिषम्

पृथिव्यामाविर्भूतो मानव आदिकालादेव आकाशस्थसूर्यचन्द्रादिप्रकाशमानज्योतिष्पिण्डान् प्रति पूर्णाकृष्टो वर्तत इति। परन्तु लक्षलक्षवर्षानन्तरमद्यापि आकाशीयज्योतिष्पिण्डानां प्रेक्षणं निरीक्षणं वा रहस्यमेवास्ति। प्रागैतिहासिककाले ज्योतिष्पिण्डैः प्रभावितो मानवो ज्योतिष्पिण्डानां कल्पनां देवत्वेनाकरोत्। पुनश्च शनैः शनैः तेषां प्रभावस्य निरीक्षणं कृत्वा जीवोपरीष्टानिष्टरूपतत्फलकल्पनमपि समये समये मनुष्येणाऽनुभूतम्। जीवेषु मानवैरेव श्रेष्ठत्वात् सूर्यचन्द्रादिज्योतिष्पिण्डानां प्रभावस्य संवेदनं स्वेष्वनुभूतम्। अपि च लोके प्रकाशितं तत्। तदभिव्यक्तिरनुभूतिश्च कालान्तरे फलितज्यौतिषरूपा विकसिता। तत्फलितज्यौतिषरूपा परम्परा कालक्रमेण वैदिकवाङ्मयादारभ्य प्रबहन्ती रामायण-महाभारतकालमाप्लावयन्ती जनमानसे वैज्ञानिकं स्थानमगृह्णात्। एतस्मात् कारणाद् विज्ञानस्य अन्यासु शाखासु फलितज्योतिर्विज्ञानशाखा सर्वाधिका प्राचीनास्ति। आधुनिकोत्कृष्टयन्त्राभावेऽपि अस्माकं प्राचीनविचारकैराकाशस्थज्योतिष्पिण्डानां ज्ञानं तत्प्रभावजनितमिष्टानिष्टफलं मानवोपरि सम्यगालोचितम्। फलितज्यौतिषस्य ज्ञानोपार्जने भारतीयमनीषिणोऽग्रगण्याः सन्ति। एतदर्थं वयं गर्वशालिनो यतो हि अस्माकं देशस्य ज्योतिर्विदामध्यवसायस्तेषां प्रतिभा चाद्यपि सर्वमान्यास्ति।

फलितज्यौतिषस्य स्थितिर्नास्ति वैज्ञानिकीति मन्यन्ते केचित्। तेषां फलितज्यौतिषस्य विरोधिनां कथनमस्ति यत् फलितज्यौतिषं सर्वथा

वैज्ञानिकतथ्यरहितम् । केनापि वैज्ञानिकतथ्येन फलितज्यौतिषस्य सिद्धिर्न भवति । फलितज्यौतिषं सर्वथा कल्पितमज्ञानयुक्तञ्चेति ।

परन्तु कथनमेतत्तेषां न कथमपि समीचीनम् । यतो हि अद्यापि फलितज्यौतिषविषयको विश्वासो विश्वस्मिन् विश्वे सर्वत्र येन केन प्रकारेण दृश्यते । मानवजीवनघटनानां प्रत्येकं कारणं प्रत्येकञ्च देशस्योत्थानं पतनं वा आकाशस्थज्योतिष्पिण्डानां विलसितमेव । जनानां विश्वासोऽयं कथमपि नो हेयः । अस्मिन् विश्वासे किञ्चिद् वैज्ञानिकमतमेव कारणमिति निरूप्यतेऽस्माभिः ।

केवलं प्राचीनमहर्षिभिः खगोलविषयकमध्ययनं कृतमिति तु न अपितु आधुनिकैर्वैज्ञानिकैरपि तदध्ययनं किञ्चित् फलमुद्दिश्यैव कृतमद्यापि क्रियते च । अधुना वैज्ञानिकैरत्याधुनिकसाधनैराकाशीयज्योतिष्पिण्डानां भौतिकसंरचना विवेचिता तद्विषयकविभिन्नसिद्धान्ताः स्थापिताश्च । तत्सिद्धान्ताध्ययनेन ज्ञायते यत् सर्वे आकाशीयपिण्डा ग्रहोपग्रहनक्षत्रधूमकेत्वादयः परस्परेण प्रभाविताः । यतो हि ते सर्वे परस्परं नियन्त्रिताः । यदीत्थं न स्यात् तदा ते सर्वे निजैककक्षायां गतिशीला न स्युर्न च संतुलिताः स्युः । अवश्यमिदं यत् सर्वेषां पिण्डानां शक्तिर्भिन्ना भिन्ना । अत एव सर्वे पिण्डा निजशक्त्यनुसारं परस्परं प्रभावयन्ति । अस्माकं सौरमण्डले सूर्यः सर्वाधिकः शक्तिसम्पन्नः पिण्डोऽस्तीति न केवलं प्राचीनमहर्षिभिरपितु नवीनैर्वैज्ञानिकैरप्यैकमत्येन स्वीकृतम् । सूर्यस्य सर्वशक्तिमत्त्वादेव 'सूर्य आत्मा जगतस्तस्थुषश्च' इति वेदेऽपि प्रथमं प्रतिपादितम् ।[1]

आधुनिकखगोलवैज्ञानिका आकाशस्थज्योतिष्पिण्डानां परस्परं भाविनस्तत्फलस्यान्वेष्टार इव प्रतीयन्ते । यत्फलमस्माकं महर्षिभिरनेकसहस्रवर्षपूर्ववैदिककालेऽन्विष्टमनुभूतञ्च तदेव कालानन्तरं निरीक्षणपरीक्षणद्वारा तैः फलितज्यौतिषरूपं लिपिबद्धं कृतम् । तदेव फलितज्यौतिषमाधुनिकवैज्ञानिकानां कृते परीक्षाविषयो विद्यते । सूर्यचन्द्रग्रहणमतिप्राचीनकालादेव कौतुककारणमासीदद्यापि चास्ति । ग्रहणस्य प्रभावः प्राचीनविचारकैः स्वीकृतस्तथा तज्जनितं फलं सम्यक् विविच्य फलितज्यौतिषे निवेशितम् । आधुनिकखगोलविद्भिः सूर्यादिग्रहणफलज्ञानार्थमेव प्रत्येकग्रहणकालेऽत्याधुनिकयन्त्रैः श्रमः

---

१. ऋग्वेदः १/११५/१

क्रियते। तैः स्वीक्रियते यद् ग्रहणस्य प्रभावो न केललं मानवोपरि भवत्यपितु सम्पूर्णजीवधारिणो ग्रहणप्रभाविता भवन्ति।

धूमकेत्वोऽप्याकाशीयपिण्डाः सन्ति। तेऽस्माकं सौरमण्डलस्य सदस्याः। भारतीयज्योतिर्विज्ञानस्य प्राचीनपरम्परायां धूमकेतूनां दर्शनमनिष्टकरं स्वीकृतम्। ईश्वीयषट्शताब्द्यामेव महत्खगोलविदा वराहमिहिरेण 'बृहत्संहितायाम्' केतुचाराध्यायेऽतिविस्तरेण धूमकेतूनां विचारः कृतः। धूमकेतूनामुदयोऽस्तञ्च महामारीप्राकृतिकविपद्देशसङ्कटादीनि उत्पादयतः। वराहमिहिरस्य धूमकेतुविषयकोक्तविचारो भवतु मिथ्याऽल्पज्ञानां कृते परन्तु विदग्धवैज्ञानिकानां कृते पृथिव्याः कक्षासमीपे धूमकेतूनामागमनं किञ्चिच्चमत्कारि भवत्येव। केचिदाधुनिका वैज्ञानिका मन्यन्ते यद् धूमकेतवो विषाणुयुक्ता जीवाणुयुक्ताश्च भवन्ति। ते जीवविषाणूनां वर्षणं कृत्वा चरन्ति। यदा ते पृथिव्याः कक्षासमीपे चायान्ति तदा विषाणुयुक्तधूमकेतवः पृथिव्यां महामारीं कर्तुं शक्नुवन्ति इत्याधुनिकानां कथनं कथमपि वराहमिहिरेण सह नाऽसम्बद्धम्।

वराहमिहिरेण १५०० वर्षकल्पपूर्वं धूमकेतूनां यत्प्रभावजनितं फलं पृथिव्यां विभिन्नघटनासु प्रत्यक्षीकृत्य गणितं स्वीकृतञ्च तदेवाधुनिकवैज्ञानिका अत्याधुनिकयन्त्रमाध्यमेन सम्प्रति साधयन्तः प्रतीयन्ते। १९८५-८६ ख्रीस्ताब्देषु एको विशालो धूमकेतुरुदितः। अधुना स 'हेलीधूमकेतुः' इति नाम्ना ज्ञायते। वराहमिहिरेण स धूमकेतुः 'ब्रह्मदण्डः' इति नाम्नाभिहितः। तस्योदयास्तफलं परमविनाशकरं युगान्तकरं वा भवतीत्यपि तेन स्वीकृतम्। तथा हि—

"ब्रह्मसुत एक एव त्रिशिखो वर्णैस्त्रिभिर्युगान्तकरः।
अनियमितदिक्सम्प्रभवो विज्ञेयो ब्रह्मदण्डाख्यः॥"[1]

अर्थाद् ब्रह्मदण्डाख्यधूमकेतुः साक्षाद् ब्रह्मसुत एकस्त्रिशिखस्त्रिवर्णैः समायुक्तोऽनियतदिक्सम्प्रभवो युगान्तकरश्चास्ति। वर्णनमिदं केवलं हेलीधूमकेतौ घटितम्। अत एव 'हेलीधूमकेतुः' वराहमिहिरस्य ब्रह्मदण्डाख्यधूमकेतुरेवास्ति हेलीमहोदयेन केवलमस्य केतोः कक्षानिर्धारणं कृत्वा तस्यागमनकालं ७५वर्षमितं निर्धारितम्। अत एव आधुनिकवैज्ञानिकैः 'ब्रह्मदण्डधूमकेतुः' हेलीवैज्ञानिकनाम्ना कालान्तरे ज्ञात इति नास्त्यत्र संशयः।

---

१. बृहत्संहितायांम्–केतुचाराध्याये—१५

वराहमिहिरस्य 'ब्रह्मदण्डाख्यधूमकेतुर्युगान्तकरः' इति कथनं निश्चितं सङ्केतति यत् तद्धूमकेतुप्रभावितस्थानं विभिन्नविपद्युक्तं भवति । विपद्वशात् तस्य स्थानस्य कस्यचित् शासकस्य शासनकालः समाप्नोति । १९८५-८६ ईश्वीयाब्देषु ब्रह्मदण्डधूमकेतोरुदयास्तप्रभावितस्थानं विविधापद्ग्रस्तमभूदिति प्रत्यक्षमेवासीत् तत्फलम् । भारते तस्यफलमतीव भयङ्करं प्राकृतिकराजनैतिकापद्युक्तमासीत् । तदैव श्रीमती इन्दिरागान्धीमहोदयायाः शासनकालो-भारतदेशे समाप्ति गतः । धूमकेतुर्यावान् शक्तिमान् भविष्यति तावानेव प्रभावं करिष्यतीत्यपि वराहमिहिरस्याभिप्रायः । तथा हि गुणकर्मवशादेव तन्नामकरणं कृतं तेन ब्रह्मदण्ड इति ।

१९८५-८६ ईश्वीयाब्देषु ब्रह्मदण्डधूमकेतुप्रभावजनितफलज्ञानार्थमेव वैज्ञानिकैरत्यधिकः श्रमः कृत आधुनिकयन्त्रैः । परन्तु स धूमकेतुः पृथिव्याः कक्षायाः कोटिकोटिमीलदूरे अवर्तत येन वैज्ञानिकानां कृते कथमपि तत्फलज्ञानस्य संभावना न जाता । परन्तु तदानीमाधुनिकयन्त्रसाधनविहीनेन वराहमिहिरेण तत्फलं घटनाक्रमानुसारेण गृहीतम् । हेलीमहोदयस्य सिद्धान्तानुसारेण ब्रह्मदण्डधूमकेतुर्वराहमिहिरसमये (५००–५८० इश्वीयाब्देषु) पृथिव्याः कक्षायाः समीपं गत इति प्रतीयते । अर्थात् तदानीं तस्योदयः संजात इति प्रतीयते । आकाशीयपिण्डत्वाद् ग्रहादिपिण्डवत् तस्य प्रभावः पृथिव्यामनुभूयते संवेदनशीलमानवैः । यदि धूमकेतूनां प्रभावो न स्यात् तदा अद्यतनीनश्चतुरवैज्ञानिकः कथं श्रमसाध्यं कठिनप्रयासं समये समये तत्प्रभावज्ञानार्थं करोति । केचिद् वैज्ञानिकाः स्वीकुर्वन्ति यत् पृथिव्यां यज्जीवनं प्राप्यते तद्धूमकेतुबलादेव ।

आधुनिकभौतिकवैज्ञानिकैरखिलब्रह्माण्डे गुरुत्वाकर्षणं विद्युच्चुम्बकीयं नाभिकीयं दुर्बलान्तःक्रियञ्चेति चत्वारि बलानि स्वीक्रियन्ते । एतेषामाधुनिकवैज्ञानिकसम्मतानां चतुर्बलानां स्वरूपं प्रथमं बोधव्यम् । यथा हि—

## गुरुत्वाकर्षणबलम्

आङ्ग्लभाषायां बलमिदं 'ग्रेविटेशनल फोर्स' इति नाम्ना ज्ञायते । पृथिव्यां पततां फलानामाकाशीयनक्षत्रादिपिण्डानां ब्रह्माण्डस्याखिलस्य समुत्पत्तेर्वा व्याख्या न्यूटनमहोदयेन गुरुत्वाकर्षणसिद्धान्तबलेन कृता । न्यूटनवैज्ञानिकानुसारेण कणद्वयमध्ये स्थितं गुरुत्वाकर्षणबलमानं कणद्रव्यमानगुणनफलस्य समानुपाति तथा च कणमध्यदूरतायाः वर्गस्य व्युत्क्रमानुपाति भवति ।

गुरुत्वाकर्षणबलं सदैव कणान् परस्परमाकर्षति । बलस्यास्य प्रभावसीमा चानन्तास्ति । गुरुत्वाकर्षणबलं प्रत्येककणेषु मध्ये स्थितं भवति । परन्तु परमाणुषु अस्य बलस्य स्थितिरतिक्षीणा भवतीति स्वीक्रियते । सापेक्षतासिद्धान्तानुसारेण कणस्य द्रव्यमानं दिक्कालसातत्येषु वक्रतामुत्पादयति । यथा हि कन्दुके या वक्रता दृश्यते सा दिक्कालसातत्यबलेनैव । 'क्वान्टम' क्षेत्रसिद्धान्तानुसारेण एकः कणोऽपरस्मिन् कणे गुरुत्वाकर्षणबलं द्रव्यमानसहिताभासिकणानां पारस्परिकविनिमयद्वारा आरोपयति ।[1]

## विद्युच्चुम्बकीयबलम्

आङ्गलभाषायां बलमिदं 'एलक्ट्रोमैगेनेटिक फोर्स' इति नाम्ना बोध्यते । आवेशितकणमध्ये स्थितं बलं विद्युच्चुम्बकीयमिति कथ्यते । आवेशितकणाना-मावेशप्रकृत्यनुसारं कणानाकर्षति प्रतिकर्षति वेति । बलस्यास्याऽपि प्रभावसीमा चानन्ता भवति । 'क्वान्टम' क्षेत्रसिद्धान्तानुसारेण आवेशिते 'फोटान' कणमध्ये द्रव्यमानसहिताभासिनां 'फोटान' - कणानां पारस्परिकविनिमयो भवति । आभासिनां 'फोटान'-कणानामायुष्यकालनिर्धारणं हाइजनवर्गस्य अनिश्चितता-सिद्धान्तानुसारं भवति । एतद्विचारणीयं यद् आभासिकणमानस्य मान्यता स्वतन्त्रमानसिकी अवधारणैव वर्तते ।[2]

## नाभिकीयबलम्

आङ्गलभाषायां बलमिदं 'स्ट्राङ्गफोर्स' इति नाम्ना ज्ञायते । बलमिदं पारमाणविकनाभिके स्थितान् 'न्यूट्रान प्रोट्रान'-कणान् परस्परमाबध्नाति । बलस्यास्य सीमा चाति स्वल्पा भवति । अस्य प्रभावसीमाक्षेत्रम् एकसेन्टी-मीटरमानस्य १/१३ भागो भवति । 'क्वान्टम' क्षेत्रसिद्धान्तानुसारेण नाभिककणमध्येऽतिभारिभासिनां 'मेसान'–कणानां पारस्परिको विनिमयो भवति ।[3]

---

१. द आइडियाज आफ पार्टिकिल फिजिक्स—जे.ई. डाड ।

२. तदेव

३. द आइडियाज आफ पार्टिकिल फिजिक्स—जे.ई. डाड

## दुर्बलान्तःक्रियाबलम्

आङ्ग्लभाषायां बलमिदं 'वीक-इन्टर ऐक्शन' इति नाम्ना कथ्यते। 'न्यूट्रानवीटो'-कणानां तात्कालिकक्षयप्रक्रियाया व्याख्या बलस्यास्य प्रभावद्वारा क्रियते। अस्य प्रभावसीमा चाल्पा भवति। बलस्यास्य मानं नाभिकीयबलापेक्षया $(10)^{12}$ न्यूनं भवति। 'क्वान्टम' क्षेत्रसिद्धान्तानुसारेणात्यन्तभारिभासिनां 'वर्चुवलपार्टिकल्स'–कणानां दुर्बलभासिनां 'वीकमेसान' कणानां च पारस्परिको विनिमयो भवति बलेऽस्मिन्निति।[1]

उपर्युक्त-चतुर्बलानां निरूपणप्रसङ्गे यथास्थानं सापेक्षतासिद्धान्तनिश्चिततासिद्धान्त'क्वान्टम'-क्षेत्रसिद्धान्तत्रयस्योल्लेखो वर्तते। अत एव मनसि स्वाभाविकी जिज्ञासा समुत्पद्यते यत् सापेक्षतासिद्धान्तस्य कोऽभिप्रायः कोऽभिप्रायोऽनिश्चिततासिद्धान्तस्य तथा च किं स्वरूपं 'क्वान्टम' क्षेत्रसिद्धान्तस्येति निराकरणायोक्तसिद्धान्तत्रयस्याऽभिधानं प्रस्तूयते। तथा हि—

## सापेक्षतासिद्धान्तः

आइंस्टीनवैज्ञानिकोऽस्य सिद्धान्तस्य संस्थापक इति। अनेन सिद्धान्तेन कस्यचिदपि गतिशीलवस्तुनो गतिर्निश्चीयते। गतिस्तु प्रति'सेकेन्ड'चलितदूरतैव भवति। गतिमानाय समयमानमावश्यकं भवति। कस्याश्चिदपि गत्या मानं कस्यचिद् प्रेक्षकस्य विविधस्थितिवशादेव ज्ञायते। आइंस्टीनवैज्ञानिकेन एतत् सर्वं सापेक्षतासिद्धान्तान्तर्गतं मत्वा निर्णीतं यत् कस्यचिदपि गतिशीलवस्तुनो वेगः प्रेक्षकस्य स्थितित्वेन सापेक्षो भवति। सापेक्षतासिद्धान्तोऽयं सर्वचलत्पिण्डेषु प्रभावी दृश्यते। सापेक्षतासिद्धान्तानुसारेण दिक्कालसातत्येषु वक्रतोत्पद्यते। सैव वक्रता गुरुत्वाकर्षणबलं जनयति। गुरुत्वाकर्षणबलं ग्रहादिपिण्डानां गतिफलनिर्धारणे सहायकं भवति।

सापेक्षतासिद्धान्तद्वारा कस्यचिदपि गतिशीलवस्तुनो गतिबोधे प्रकाशस्य महती योग्यतानुभूयते। विना प्रकाशेन वस्तुवेगनिर्धारणमसम्भवमेव। प्रकाशसङ्केतद्वारैव किञ्चिद्वस्तु तत्क्रिया च निश्चीयते। अतएव आइंस्टीनमहोदयेन स्वे सापेक्षतासिद्धान्ते प्रकाशस्य तस्य वेगस्य च समीकरणं कृतम्। प्रकाशस्य प्रति'सेकेन्ड'वेगः $3 \times 10^8$ 'मीटरा'त्मकः स्वीक्रियते। कस्यचिदपि भौतिक-

---

१. तदेव

वस्तुनो वेगः प्रकाशवेगान्न्यूनमेव भवति । यदि विशेषस्थित्यां किञ्चिदपि वस्तु प्रकाशवेगं प्राप्नोति तदा तद्वस्तु ऊर्जारूपे परिणमति । प्रकाशस्य वेगे तथा वस्तुभारे च आइंस्टीनमहोदयेन एकं समीकरणं स्थापितम् । तथा हि—ऊर्जा = भारः × प्रकाश-वेगः[२] (ई. = एम.सी.[२]) इति । आइंस्टीनमहोदयानुसारेण प्रत्येकवस्तुभारः तद्वस्तुवेगे आधारितो भवति । यथा यथा वस्तुवेगो वृद्धिमायाति तथा तथा तस्य वस्तुन आभासिभारोऽपि वृद्धिं याति । परन्तु नियमोऽयं तत्रैव प्रभावी भवति यत्र वस्तुवेगः प्रकाशवेगेन तुल्यो न स्यादपितु तुल्यकल्पो भवेदिति । आङ्ग्लभाषायां सिद्धान्तोऽयं 'रिलेटिबिटीथ्योरी' इति नाम्ना ज्ञायते ।[१]

## अनिश्चिततासिद्धान्तः

हाइजनवर्गमहोदयस्य प्रस्ताविताऽनिश्चिततासिद्धान्तानुसारेण कस्यचिदपि कणस्य स्थितेस्तत्कणवेगस्य च द्वयोरेकस्मिन् समये यथार्थनिर्धारणंमसम्भवमेव । एतत्सिद्धान्तद्वारा निर्दिश्यते—यदि 'इलेक्ट्रान'कणस्य स्थितिर्यथार्थरूपेण निर्धार्यते तदा तस्य कणस्य वेगोऽनिश्चितो भवति । यदि तस्य वेगो निश्चीयते तदा तस्य स्थितिरनिश्चिता भवतीति नियमः । सिद्धान्तोऽयमिदमपि प्रतिपादयति यद् विश्वस्मिन् संसारे किञ्चिद् वस्तु प्रथमे क्षणे यादृशं दृश्यते द्वितीये क्षणे तादृशं नानुभूयते । संसारे सर्वमनिश्चितमित्यपि भानः । आङ्ग्लभाषायां सिद्धान्तोऽयम् 'अन्सर्टेन्टीप्रिन्सिपिल' इति नाम्ना ज्ञायते ।[२]

## 'क्वान्टम'क्षेत्रसिद्धान्तः

जर्मनवैज्ञानिकमैक्सप्लैंकमहोदयस्य 'क्वान्टम'क्षेत्रसिद्धान्तानुसारेण किञ्चिदपि वस्तु विकीर्णोर्जायाः शोषणमुत्सर्जनं वा निरन्तरं न करोति, अपितु शोषणमुत्सर्जनमूर्जायाः 'क्वान्टम'मानमाध्यमेन करोतीति । कथमस्यास्याभिप्रायोऽयं यदूर्जाया विकिरणं भवति तत्तु निश्चित-'क्वान्टम'मान युक्तमेवेति ज्ञेयम् । आङ्ग्लभाषायां सिद्धान्तोऽयं 'क्वान्टमथ्योरी' इति नाम्ना ज्ञायते ।[३]

---

१. डिक्शनरी आफ साइंस—द पेंगियम बुक्स

२. तदेव

३. तदेव

अत एव ज्ञायतेऽस्माभिर्यदेतदुक्तचतुर्भौतिकबलैः सम्पूर्णब्रह्माण्डं संतुलितं तथा तस्य सम्पूर्णकार्यजातं प्रचलति। अस्माकं सौरमण्डलमखिलब्रह्माण्डस्यैकमतिस्वल्परूपं वैज्ञानिकैः स्वीक्रियते। यतो हि वैज्ञानिकानां मतं यत् सूर्यः स्वसम्पूर्णपरिवारसहितः (सर्वग्रहोपग्रहधूमकेतुसहितः) अनन्तब्रह्माण्डेऽस्मिन् ३०० किलोमीटरात्मिकमा गत्या प्रतिसेकेन्डं चलत्येव।[१] एतेनास्य ब्रह्माण्डस्य विशालता तथास्य सौरमण्डलस्य सूक्ष्मता च कल्पनीया।

अस्माकं सौरमण्डलं ब्रह्माण्डस्याङ्गभूतमस्ति तत्रापि उक्तप्रकारकाणि चत्वारि बलानि स्वकार्यं कुर्वन्ति। सम्पूर्णः सौरपरिवारः संतुलित एभिर्बलैः। सर्वे ग्रहोपग्रहादयो निश्चितगत्या गतिशीला दृश्यन्ते। गुरुत्वाकर्षणसिद्धान्तद्वारा वैज्ञानिकैर्ज्ञातं यत् सर्वे आकाशीयपिण्डाः परस्परमाकर्षिताः सन्ति। तत्र ब्रह्माण्डस्यापरं बलं विद्युच्चुम्बकीयमनेकक्रियाः प्रतिक्रियाश्च जनयति। तत्रैव क्रियाप्रतिक्रियासु नाभिकीयनामकं दुर्बलान्तःक्रियञ्चेति बलद्वयं सहयोगं करोति। प्रधानतया गुरुत्वाकर्षणं विद्युच्चुम्बकीयं नामकं बलद्वयमाकाशीयपिण्डान् परस्परं प्रभावयितुं बाध्यते। सर्वे पिण्डाः न समानबलिनः। यतो हि न ते समानभाराः। अतएव तत्र तत्र न समानगुरुत्वाकर्षणम्। असमानगुरुत्वाकर्षणत्वात् सर्वे पिण्डा भिन्नबलान्विताः। अतो निर्बलपिण्डः सबलपिण्डेन प्रभावितो भवतीति सिद्धान्तः स्थाप्यते।

पृथ्वी सौरमण्डलस्यास्माकमेको ग्रहोऽस्ति। अत्रापि चोक्तप्रकारकाणि चत्वारि बलानि सर्वं कार्यजातं सम्पादयन्ति। इयं पृथ्वी अन्यानाकाशीयपिण्डान् प्रभावयति तथा चान्यैः पिण्डैः प्रभाविता भवति। अद्यतनीयान्वेषणानुसारं केवलमस्य सौरमण्डलस्य पृथिव्यामेव मानवो न कुत्रापि ग्रहेष्वन्येषु। पृथिव्या अङ्गभूतत्वान् मानवशरीरेऽपि तथा मानवस्य विविधक्रियाव्यापारेष्वपि ब्रह्माण्डस्योक्तचत्वारि बलानि प्रयुक्तानि सन्ति। मानबलं खगोलीयपिण्डबलापेक्षया न्यूनतमम्। अतएव मानवशरीरं तत्क्रियाश्चाकाशीयप्रबलपिण्डैर्ग्रहादिभिरवश्यं प्रभाविताः।

कदाचित् सौरवायुकारणेन सूर्ये भयङ्करचुम्बकीयझञ्झोद्वेलिता भवति। आभिः चुम्बकीयझञ्झाभिः सर्वे ग्रहोपग्रहाः प्रभाविताः सन्ति। तदा ते परस्परमपि प्रभावयन्ति। चुम्बकीयझञ्झाभिः पृथिव्याः प्राकृतिकावस्थाऽस्तव्यस्ता भवति। ऋतुषु चास्वाभाविकं परिवर्तनं सर्वत्र दृश्यते। मानवः पृथिव्याः

---

१. धरती और आकाश—प्रगति प्रकाशन, मास्को—१९८०, पृष्ठ—३०२

प्रकृत्या सह सम्बद्धत्वादात्मानमनेकप्रकारेण प्रभावितं मानयति तथा तत्प्रभावं कुत्रचित् सुखात्मकं कुत्रचित् दुःखात्मकमिति फलरूपं स्वीकरोति । मानवः संवेदनशीलत्वात् सुखात्मिकां दुःखात्मिकामनुभूतिं च करोति । मानवे संवेदनशीलता विद्युच्चुम्बकीयबलात् प्रादुर्भवति । मानवशरीरस्य संरचना प्रमुखतया विद्युच्चुम्बकीयैव । यदा मानवशरीरगा विद्युच्चुम्बकीयशक्तिरन्यस्रोतोजन्यप्रबलया विद्युच्चुम्बकीयशक्त्या प्रभाविता भवति तदा मानवस्य शारीरिकी मानसी च स्थितिरसंतुलिता भवति । शारीरिकमानसिकासंतुलने सति मानवस्य कार्यप्रणाली अव्यवस्थिता दृश्यते । तथा हि अनुभूयते—रेडियोदूरदर्शनकेन्द्रेषु यत्र विद्युच्चुम्बकीया शक्तिः प्रबलतमा भवति तत्र कार्यरतः कश्चिदपि जनो निश्चितसमयानन्तरं तच्छक्तिप्रभावेण स्वं सामान्यं नानुभवति । तदा स कार्यमुक्तो भवति विश्रामार्थम् विद्युच्चुम्बकीयबलस्य प्रभावः सर्वाधिको मानवमस्तिष्कं याति येन स सुखं दुःखं वाऽनुभवति ।

उक्तप्रकारकाणि गुरुत्वाकर्षणं नाभिकीयं विद्युच्चुम्बकीयं दुर्बलान्तःक्रियञ्चेति चत्वारि भौतिकबलानि १९७५ ईश्वीयाब्दतः पूर्वमेव वैज्ञानिकानां मते पृथक्-पृथगासन् तद्बलैरेव बलान्विता अस्माकं ग्रहादयो ज्योतिष्पिण्डाः परस्परं प्रभाविताः सन्तो मानवोपरि विविधप्रकारकं फलं प्रकटयन्ति स्म । परन्तु १९७५ ईश्वीयाब्देषु डाक्टर सलाम-डाक्टर वाइनवर्गमहोदयाभ्यां मार्गितं यद् विद्युच्चुम्बकीयं दुर्बलान्तःक्रियञ्चेति बलद्वयं नहि स्वतन्त्रमपितु विद्युद्दुर्बलनामकस्य पृथक् भौतिकबलस्याङ्गभूतम् ।[1] अतएव सम्प्रति केवलं गुत्वाकर्षणं नाभिकीयं विद्युद्दुर्बलञ्चेति भौतिकबलत्रयमखिलब्रह्माण्डेऽस्माकं सौरमण्डले च वर्तते । तद्बलत्रयेणैव बलान्विता ग्रहादयो मनुष्यं प्रभावयन्ति विविधफलञ्च कुर्वन्ति ।

अत्रैतत्तु विचारणीयं यद् आइंस्टीनवैज्ञानिकेन पूर्वमेव निगदितमासीद् यदुक्तप्रकारकाणां चतुर्बलानां स्थितिः कस्मिंश्चिदेकस्मिन् बले भवितुं शक्नोति । कालान्तरे डाक्टरवाइनबर्गडाक्टरसलाम-महोदयाभ्यामन्वेषणानन्तरं चतुर्बलस्थाने बलत्रयमेव साधितमुक्तप्रकारक ( । कस्मिंश्चिदपि काले कोऽपि वैज्ञानिकः संसाधितुं समर्थो भविष्यति यदस्मिन्नखिलब्रह्माण्डे केवलमेकस्यैव भौतिकबलस्य सत्ता वर्तते । एतदर्थं संसारेऽद्य सर्वत्र भौतिकवैज्ञानिका अन्वेषणतत्पराः श्रूयन्ते । किन्तद्बलमास्माकीनैरतिप्राचीनमहर्षिभिः

---

१. द आइडियाज आफ पार्टिकिल फिजिक्स — जे० ई० डाड

पूर्वमेव निर्धारितं सर्वशक्तिमद्बलं ब्रह्मैव भवितुमर्हति । यतो हि भारतीय-मनीषिभिरतिप्राचीनकाले स्वीकृतं यद् यत्र कुत्रापि किञ्चिदपि कथमपि बलं दृश्यते तत्सर्वं परमबलरूपब्रह्मान्तर्गतमेवेति मत्वैवोक्तमिदम्—

तदेव लग्नं सुदिनं तदेव
ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव
लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥[1]

अतिप्राचीनकालादेव मानव आत्मानं परितो नित्यनूतनाकाशीयपिण्डा-नामागमनं दृष्ट्वा अनुभूतवान् यत् तेषामागमनेन किञ्चित् प्रकृतौ किञ्चित् मानवजीवने च परिवर्तनं परिलक्ष्यते । तत्प्राकृतिकमानवीयपरिवर्तनं दृष्ट्वा अस्माकं प्राचीनमहर्षिभिराकाशीयज्योतिष्पिण्डान् प्रति स्वस्य तात्का-लिकसाधनानुरूपं तद्विषयकमध्ययनं कृतम् । बहुमननिदिध्यासनानन्तरं तैस्तेषां ज्योतिष्पिण्डानां शक्तिगतिरूपरङ्गाकृतिनिर्धारणं तत्फलनिरूपणमपि विहितम् ।

वैदिककालस्य खगोलमनीषिभिर्ज्योतिष्पिण्डाः सूर्यचन्द्रादयः सम्यक् परिचिता आसन् । तेषां पिण्डानां मानवोपरि प्रभावं स्वीकृत्य तत्प्रभा-वस्य किं फलमिति मत्वा तद्विषयक-विवेचना तैः कृताऽऽसीत् । तेषां महर्षीणां ग्रहविषयकविविधविवेचनाधुनिकखगोलविज्ञानस्य प्रथमं सोपानमासीत् । वैदिकविचारकैरेकसीमापर्यन्तं तात्कालिकपरिस्थित्यनुसारं खगोलविज्ञानं तद्वि-षयकं फलञ्चाधिगतम् ।

वैदिकवैज्ञानिकाः पूर्णविश्वस्ता आसन् यद् आकाशीयपिण्डा मनुष्यं प्रभावयन्ति तथा तस्य सुखदुःखनियामका अपि सन्ति । वैदिकवाङ्मयाध्य-नेन ज्ञायते यन्नक्षत्रापेक्षया ग्रहा अधिकप्रभाविनो भवन्ति । तेषां ग्रहाणां विभिन्नप्रभावैः प्रभावितैस्तैर्महर्षिभिर्नक्षत्रापेक्षया ग्रहशक्तिप्रभाववर्णनमधिकं कृतम् । तैर्ज्ञातं यन्नक्षत्रं दूरस्थितम् । ग्रहो नक्षत्रापेक्षया निकटवर्ती । अतएव निकटस्थो ग्रहो मनुष्यधिकतया प्रभावयिष्यति । किमृषीणामेच्चिन्तनं न वैज्ञानिकम् ? यो यावान् निकटो भवति तस्य प्रभावस्तावानेवाधिको भवतीति ।

---

१. ग्रहशान्तिप्रयोगः—पृष्ठ–६, प्रकाशक–ठाकुर प्रसाद एण्ड सन्स बुकसेलर, वाराणसी ।

वैदिकवैज्ञानिकैर्ग्रहनक्षत्राणां प्रभावजन्यं फलं परिश्रमेण संसाधितम् । मनुष्याणां विभिन्नतात्कालीनपरिवर्तनशील-परिस्थितिं दृष्ट्वा तेषामुपरि ग्रहादीनां फलमन्वेषितम् । तैर्विकसिता निर्धारिता च फलनिरूपणप्रणाली ग्रहाणां विविधस्थित्यनुभवबलादेव । तैर्विभिन्नकालेषु ग्रहनक्षत्राणां विभिन्नस्थितिषु प्राकृतिकमानवीयपरिवर्तनानां परीक्षणं निरीक्षणञ्च कृत्वा तत्फलनिरूपणं तेषां ग्रहादीनां निरीक्षणपरीक्षणद्वारातत्फलनिरूपणं सर्वथा वैज्ञानिकमासीत् । यतो हि विविधपरिस्थितिवशान्निरीक्षणपरीक्षणबलेन निष्कर्षभूतमधिगतं फलं वैज्ञानिकपरम्परान्तर्गतमेव । किञ्चिन्निष्कर्षभूतं फलं प्राप्तुं न केवलं यन्त्राधीना प्रणाली वैज्ञानिकी, अपिच विभिन्नप्राकृतिकसामाजिकमानवीयपरिस्थितीनां विवेचनापि वैज्ञानिकी प्रणालीति भवितुं शक्नोति । सापि वैज्ञानिकनिर्णयभूतफलं प्रदातुं समर्थास्ति ।

आधुनिकखगोलविद्भिः खगोलपिण्डानां भौतिक-संरचना सम्यगधीता परन्तु तेषां कः कः प्रभावो जनजीवने भवितुं शक्नोतीति तैर्न समीचीनमधीतम् । अस्माकं प्राचीनखगोलमनीषिभिः पिण्डानां भौतिकसंरचनया सह तज्जन्यं फलमपि ज्ञातुं प्रयत्नः कृतो विविधनिरीक्षण-परीक्षणमाध्यमेन । कश्चिदपि प्रेक्षावदाधुनिकखगोलवैज्ञानिकोऽस्माकं प्राचीनखगोलमनीषिणामाकाशीयज्योतिष्पिण्डफलचिन्तनं सर्वथा मिथ्येति वक्तुं नोत्सहते । डॉक्टर निहालकरण सेठीमहोदय एको लब्धप्रतिष्ठो विद्वान् ताराभौतिकीक्षेत्रे खगोलविद्भिर्गण्यते । तेनापि स्वीकृतम् यत् फलज्यौतिषं सर्वथा नाऽस्त्यसत्यम् । उक्तं हि तेन— 'फलज्यौतिषं भवतु मिथ्या परन्तु निर्विवादोऽयं विषयो यद्यथा कृत्रिमस्वर्णनिर्माणनिरन्तरचिन्तनेनाधुनिकरसायनविज्ञानस्योत्पत्तिः संजाता तथैव फलितज्यौतिषविश्वासेनाधुनिकज्यौतिषस्योन्नतिः प्राप्यते ।'[१]

प्रायो जनैः कथ्यते यत् फलितज्यौतिषस्य फलं न घटते । एतत् कथनं समीचीनमेव प्रतीयते । परन्तु नो विस्मर्तव्यमेतद् यतो ह्यस्माकं फलितज्यौतिषशास्त्रेषु प्रतिपादितं फलमतिप्राचीनकालीनग्रहाणां विभिन्नपरिस्थितीनां परीक्षणनिरीक्षणमूलम् । सम्प्रति ग्रहाणां सा स्थितिर्नास्ति या स्थितिरतिप्राचीनकाले आसीत् । अत एव ग्रहभिन्नस्थितिवशादाधुनिकसमये ग्रहजन्यफलमपि नास्ति तादृक् यादृक् पुरासीत् । जातकस्य चाघटितफलं दृष्ट्वैव ते केचिदविचक्षणाः स्थितिं विना विचार्यैव कथयन्ति-'फलितज्यौतिषं मिथ्याऽवैज्ञानिकं चेति' ।

भारतीयफलितज्यौतिषस्य सिद्धान्तग्रन्थानां दर्शनेन ज्ञायते यद् वराह-मिहिरादनन्तरम् अर्थादीशोः षट्शताब्द्यनन्तरं ग्रहाणां फलोपरि वैज्ञानिक-चिन्तनं न जातम् । केवलं फलितज्यौतिषस्य प्रचलितपरम्परानिर्वाहः कैश्चिद् विद्वद्भिः समये समयेऽङ्गीकृतः । अद्याऽऽकाशीय-पिण्डानां विविधफलप्रदानां तथार्थफलज्ञानार्थं शोधकार्यस्यावश्यकता वर्तते । नास्त्यावश्यकता मिथ्या फलितज्यौतिषमिति कथनस्य । फलितज्यौतिषं वैज्ञानिकं ग्रहाणां विविध-स्थितिपरिस्थितिवशेन फलसाधनत्वात् । वैज्ञानिकनियमाः सदा ससीमा भवन्ति । कालानन्तरं तेषु नियमेषु संशोधनं परिवर्तनं परिवर्धनञ्च सीमावर्ध-नाय वैज्ञानिकैः समये समये क्रियते । परन्तु विषयसीमाविस्तारं प्राप्य फलित-ज्यौतिषं स्वस्य फलकथननियमसीमाविस्तारतां न गतमिति ।

कश्चिदपि वैज्ञानिको ग्रहादीनां ज्योतिष्पिण्डानां प्रभावजन्यं फलं न भवतीति न कथयिष्यति । यतो हि स जानाति यत् संसारस्य प्रत्येकं निक-टस्थं दूरस्थं वा वस्तु परस्परं प्रभावयति स्वल्पं बहु वा निजबलानुसारम् । प्रभावितवस्तुषु फलमिष्टानिष्टात्मकं दृश्यते । पृथिव्या अङ्गभूतसूक्ष्मस्थूल-पदार्था जीवाश्चापि परस्परं प्रभावयन्ति । तेषां प्रभावस्य फलमपि स्पष्टं प्रतीयते । यदि पदार्थानां परस्परं प्रभावो न भवतु तदा किमर्थं केनचित् सह सम्पर्कमात्रेण कश्चित् सुखं दुःखं वाऽनुभवति । सर्वाणि वस्तूनि सर्वदैकसदृशानि भवन्ति पस्परप्रभावाभावे । प्रभावत्वादेव वस्तुषु विकारः परिवर्तनं वा परि-लक्ष्यते । जन्ममृत्युबन्धनमपि न भवेद् यदि पृथिव्यां सूर्यादिज्योतिष्पिण्डानां प्रभावो न स्यात् । पृथिव्यां या कापि गतिरनुभूयते सापि सूर्यचन्द्रभौमबुध-गुरुशन्यादिग्रहप्रभावबलेनैव । यदि चान्यैनिकस्थैर्दूरस्थैर्वा ग्रहैः पृथिवी प्रभा-विता तदा कस्मान्न प्रभावितः स्यान् मानवस्तत्र निवसन्निति ।

हाईजनवर्गमहोदयस्य स्थित्यनिश्चयसिद्धान्तः (अनसर्टेन्टी-प्रिन्सिपिल) प्रमाणयति यद् यादृशी स्थितिरद्य कस्यचिदस्ति तादृशी स्थितिः श्वो न भविता । सर्वेषां विज्ञानानामपि स्थितिसीमा सर्वदा परिवर्तनीया भवत्युत्त-रोत्तरा शतवर्षपूर्वं चिकित्साविज्ञानस्य नूतनोत्था समस्या न विचारणीया भवेत् तदा तस्य पतनमवश्यं संभावि । अद्य फलितज्यौतिषस्य विषये कापि गतिरेतादृशी दृश्यते । तस्य समक्षं बहुविधा नूतनोत्था समस्याः सम्भूता यासां समाधानमावश्यकं प्रतिभाति । तत्तन्नूतनोत्थसमस्यासमाधानं विना मलिन-दर्पणमिव फलितज्योतिषं किञ्चिदपि स्वच्छं स्पष्टं च फलप्रतिबिम्बं प्रकाशितुं

न समर्थम् । अतएव प्रथमं समाधेया नवनवोन्मेषितफलितज्यौतिषसमस्या नित्यं सुविज्ञैर्विचारकैरिति ।

फलितज्यौतिषमस्माकं प्राचीनविज्ञानधारास्ति । अस्योद्गमस्थानं वैज्ञानिकचिन्तनमेव । यदि कश्चिद् दोषोऽत्र दृश्यते तदा स परिमार्जनीयः । यथा कश्चिदनुभवहीनचिकित्सकस्य चिकित्सा कदाचिदहितकारित्वात् सम्पूर्णाधुनिकचिकित्सापद्धतिर्न दूष्यते तथैव कश्चिदनुभवहीनज्यौतिषवेत्तुरपुष्टफलनिर्देशेन नहि सम्पूर्णमतिप्राचीनविज्ञानस्वरूपफलितज्यौतिषं मिथ्या कपोलकल्पना वेति भविता । ग्रहाणां विभिन्नपरिस्थित्यनुजवजन्यफलं फलितज्यौतिषं कथमपि प्रयोगशालासाध्यविज्ञानं भवितुं न शक्नोति । अस्ति कश्चिद् वैज्ञानिको यः प्रयोगशालायां ग्रहमानीय तस्य फलाध्ययनं कर्तुं शक्नोति । अतः केवलं प्रयोगशालाजन्यनिर्णयभूतं फलं वैज्ञानिकमिति तु न, अपि तु विविधपरिस्थित्यनुभवजन्यनिर्णयभूतं फलमपि वैज्ञानिकं यथा फलितज्यौतिषमिति । अत एव तच्चिन्तनीयं जनकल्याणाय विबुधैः सदेति ।

—०—

प्रा० वासुदेव वि० पाठकः
अहमदाबाद

# कविताद्वयम्

## १. मातृवन्दना

मातृवन्दना वरास्ति राष्ट्रवन्दना
धर्मसर्वकारिणीति मातृवन्दना ॥

भारतीयसभ्यतास्ति भव्यतायुता
भारतीयभद्रवर्तने विनम्रता;
अनुद्धतास्सदा नराः सुखेन संयुताः
मातृवन्दना वरास्ति राष्ट्रवन्दना ॥

पञ्चशीलकार्यरीतिरत्र सेविता
सर्वलोकहितमयी परम्परावृता;
सज्जनस्य मतिगती अनुसृते सदा
मातृवन्दना वरास्ति राष्ट्रवन्दना ॥

या स्मृता सदा सदा उदारताप्रदा,
जगति जयति माता सा ज्ञानमार्गदा;
कारणेन तेन जन्मभूमिवन्दना,
मातृवन्दना वरास्ति राष्ट्रवन्दना ॥

## २. मदीये राष्ट्रे

सत्यं यत्परमं सदात्मनिरतैः भद्रं यह्लोवात्मकम्
अर्हन् बुद्धमयं शिवं मुनिवरैः नित्यं अहुर्मज्द वा ।
सत्नामेति च राध्यते सुमधुरं अल्लाह् ताओ इति
तत्त्वं तद् विदधातु शान्तिमतुलां राष्ट्रे मदीये शुभाम् ।।

—०—

डॉ० कृष्णलालः
दिल्ली

# निम्नगाया मोक्षः

शैलप्रदेशे पाषाणान् उत्खनन्ती, उच्चैर्निनादेन निखिलं वनमुद्घोषयन्ती, धावन्ती, निपतन्ती, उत्पतन्ती, नृत्यन्ती, उच्छृङ्खलेव ललना नदी निजतरङ्गाङ्गैरम्बरमिव नीलमुत्क्षिपन्ती वेगेन पदक्रमं चकार। विवेकशून्येव यत्र कुत्रापि मार्गमनवेक्ष्य शृङ्गादपि अकूर्दत् जलपातचीत्कारेण च सुदूरमपि वनप्रदेशमगुञ्जयत्। नासीत् स्वच्छन्दचारिण्यास्तस्याः कश्चन मार्गः। असंयमितायास्तस्याः यस्यामपि दिशि पदक्षेपोऽभूत् स एवासीत् तस्याः मार्गः, परमस्याः स्वतन्त्रतायाः परिणामस्वरूपं सा निम्नमेव पदं लेभे—तुङ्गश्शृङ्गात् कुशीला सा निम्नां भूमिं गतवती। अतएव लोकैस्तस्याः निम्नगेति नामाकारि। इदानीं तस्या गतिरासीत् संयता, सा च मार्गं निश्चिन्वन्ती मन्दगत्या सलज्जं नीलमम्बरं विभ्रती, स्वशरीरे बहून् जन्तून् जलपोतांश्च वहन्ती, एवं भृशमुपकुर्वन्ती सर्वमपि मालिन्यं निगीर्य निर्मलं रूपं धारयन्ती कलङ्कप्रक्षालिनी, पावनी च प्रियं सागरमुपेत्य तस्योरसि स्वतनुं समर्पयति। स एव तस्या मोक्षः। स एव तस्यास्तृप्तिः। परस्परं शरीरयोरात्मनोश्च समर्पणमेव मोक्षः।

—०—

डॉ० अमरनाथ पाण्डेयः
वाराणसी

## वसन्तोत्सवः

हे वसन्तोत्सव ! शीलय नवं स्वरूपं रम्यं रूपम् ।
न शोभते प्राचीनम्
मनो न स्पृहयति
न ध्यायति विलासम्
न प्रेयोऽभिलषितम्
नवं युगं प्रभवति
पुराणं विलीनम्
नीतिर्नवा नृत्यति
विशदं प्रकामम्
श्रेयः पदं मनसि धत्ते
कुरुते वितानम्
यत्र स्थिरा शान्तिः
परमं भूषणम्
तेन भावय भावय
हे वसन्त ! सतां हृदि सत्यं सन्देशं सङ्कल्पम् ॥१॥

तवोत्सवः कान्तः
कणे कणे लसति
दिशति देशनाम्
परिष्कारभूतये
न तु लक्ष्म्यै चञ्चलायै
दुर्विनीतानुरक्तायै
न च भोगाय न च रागाय
न च गृध्नवे
सत्त्वस्य विघाताय
यत्र विलपन्ति देवाः
द्रुतानि चरितानि
तानि तानि पूतानि
सर्वं स्थास्नु चिनु
हे मह विकृतिं छिन्धि कल्पय कल्याणं सनातनम् ॥२॥

न मदिरा न मदः
न वाणिनीविलासाः
न च गीतानि मूर्च्छन्ति
न चोन्मादहासाः
प्रतिफलन्ति न हर्म्येषु
सततं कैतवानि
चेतना प्रसरतु
व्याप्नोतु भुवनानि
उल्लासः प्रतिक्षणं भुवने भुवने
रमयति कलरवो वने वने
दूषितं त्यक्तम्
हे वसन्त वितनु मधुरमुत्सवं मधुरम् ॥३॥

एकतो दृष्टिं कलुषयति कर्दमो मलिनः
लोहितो वर्णो मज्जयत्येकतोऽविकलं
निखिलं जगत् किमनुरागेण
नैव वस्तुतो गर्ह्या
तव प्रभावादविरतम्
सर्वस्य लोकस्यायम्
सफलयतु नितान्तम्
अभीष्टमुत्सवः किमप्यपूर्वम्
भावना रूपं श्रयतु
सुखश्रवं वाद्यं नदतु
येनाऽपयातु दुरितमसूया पीडा
हे वसन्त तवोत्सवो रमणीयो विलसतु निकामं रमणीयः ॥४॥

नवं गीतं रागैर्नवै राश्लिष्टम्
गूढं सतामभिप्रेतम्
बालानामुत्साहस्तेषु तेषु कार्येषु
वृद्धिं गतो राष्ट्रम्
पुष्यतु सलीलम्
पद्धतिं रचयतु नवाम्
बोधं कलयतुतमाम्
दृढं निर्विकारं सर्वतः
प्रभुतामाविष्करोतु
न पूर्वं दृष्टो न चानुभूतः
कोऽप्युत्सवो वसन्तस्य चित्तेऽभिनन्दितः
हे वसन्त शीघ्रं प्रेषय मेघदूतं प्रियं दूतम् ॥५॥

न विस्मृतिं किन्तु बोधम्
निपुणं ध्यातामथ नीतिम्
हिमालयस्योत्तुङ्गताम्

अशोक कालिया
लखनऊ

## स्वरोऽसौ मदीयस्त्वदीय·*

स्वरोऽसौ मदीयस्त्वदीयः
मिलेच्चेद् भवेदस्मदीयः
स्वरतरङ्गिणी दिशः प्रतिदिशः
मिलेत् स्रवन्ती-नाथम्
वारिदानां रूपमाप्त्वा
वर्षेन् मधुरं मधुरम् ॥

स्वरोऽसौ मदीयस्त्वदीयः

---

* दूरदर्शने बहुप्रचारितस्य लोकसेवासञ्चारपरिषत्प्रस्तुतस्य 'मिले सुर मेरा तुम्हारा' इति गीतस्य संस्कृतरूपान्तरम्